हे धूर्जटे धूरसि धूर्वं मोहं धूर्वन्तमेतं जहि रागदैत्यम् ।
प्रमादमायागदवैद्यनाथ शंभो कृषीष्ठा विमलं द्रुतं माम् ॥ ६६ ॥

अन्योऽब्रवीन्निर्व्यसनोऽवधूतो दयार्जवत्यागशमक्षमाद्यैः ।
गुणैर्युतत्वाद्ध धनिकश्च विद्वांस्तन्वा विरूपोऽप्यतिसुन्दरोऽहम् ॥ ६७ ॥

---

अन्नपतेऽन्नस्य ॥ श्रीश्चते लक्ष्मीश्च ते पत्न्यौ ॥
हिरण्यगर्भः समवर्तताग्रे ॥ विराजो दोहोसि ॥
पद्भ्यां भूमिः ॥ ( वाजसनेयिसंहिता ) ॥

हे धूर्जटे ! आप संसारचक्र के धुरे हैं । कृपया हमें सताने वाले मोह और राग नामक दैत्यों का नाश करें और हे वैद्यनाथ ! प्रमाद तथा माया रूपी रोगों को समाप्त करें । हे शम्भो ! आप दोषों से सर्वथा विहीन हैं । हमें भी शीघ्रातिशीघ्र वैसा ही विमल और शिव बना दें ॥ ६६ ॥ इस विषय में भगवान् शंकराचार्य ने अपनी परापूजा में लिखा है—

अखण्डे सच्चिदानन्दे निर्विकल्पैकरूपिणि ।
स्थितेऽद्वितीयभावेऽस्मिन् कथं पूजा विधीयते ॥
पूर्णस्यावाहनं कुत्र विश्वाधारस्य चासनम् ।
स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥
निर्मलस्य कुतः स्नानं वस्त्रं विश्वोदरस्य च ।
अगोत्रस्य त्ववर्णस्य कुतो यज्ञोपवीतकम् ॥
निर्लेपस्य कुतो गन्धः पुष्पं निर्वासनस्य च ।
निर्विशेषस्य का भूषा कोऽलंकारो निराकृतेः ॥
निरंजनस्य किं धूपैर्दीपैर्वा सर्वसाक्षिणः ।
निजानन्दैकतृप्तस्य नैवेद्यं किं भवेदिह ॥
स्वयं प्रकाशमानस्य कुतो नीराजनं भवेत् ।
प्रदक्षिणमनन्तस्य कथमुद्वासनं विभोः ॥

पिता जी की सभा में आये एक अन्य महात्मा अपने को और शिव को अवधूत कहते थे । उनकी बातें भी अद्वैतवाद से मिलती प्रतीत होती थीं । वे धूमपान, मद्य, मांस और कपाल आदि से दूरस्थ थे । वे कहा करते थे कि मैं दया नम्रता त्याग शम क्षमा आदि गुणों से युत होने के कारण बहुत धनी विद्वान् और सुन्दर हूँ ॥ ६७ ॥ सदा सत्कर्म में रत रहता हूँ अतः

शिवो ममात्मास्ति शिवा मतिर्मे सर्वाः क्रियाः सन्ति शिवाः शिवार्चाः ।
मन्त्रोपमाः स्तोत्रसमा गिरो मे यतः सदा संयमतत्परोऽहम् ॥ ६८ ॥

तीर्थाटनं मे गममं समस्तं भोगोऽस्ति योगः शयनं समाधिः ।
गंगाजलं सर्वजलं मदर्थे सर्वा धरा चेन्द्रपुरी सुरोऽहम् ॥ ६९ ॥

ममात्मनीशस्य सदोदितत्वात्कदापि नो याति मतिः कुमार्गे ।
न यान्त्यघे वाग्रसनाक्षिकर्णा न नासिकात्वग्विषयातुरोऽहम् ॥ ७० ॥

ज्ञातिर्न मे नास्ति कुलं न देशो जगत्प्रियः प्रोज्झितबन्धनोऽहम् ।
न मे रिपुः कोऽपि नरोस्ति भूमौ निरामयोनिर्मलमानसोऽहम् ॥ ७१ ॥

मां श्रद्धयार्चन्ति समेऽपि लोका यतः समेषां शुभचिन्तकोऽहम् ।
रुदन्ति सर्वेऽपि च मामदृष्ट्वा तेषां मते सूरतशंकरोऽहम् ॥ ७२ ॥

परन्तु वाचंयमसत्त्वधाम्नो हरीशनारायणविष्णुनाम्नः ।
निराकृतेर्देहभृतश्च शंभोस्तस्यानुगानामपि किङ्करोऽहम् ॥ ७३ ॥

---

मेरा आत्मा शिव है, बुद्धि शिवा है, सारा बोलना मंत्रों और स्तोत्रों का पाठ है और सारे कर्म शिवशिवा की पूजा हैं ॥ ६८ ॥ मेरी सारी यात्रायें तीर्थाटन हैं, सारे भोग योग हैं, शयन समाधि है, मेरे लिये सारे जल गंगाजल हैं, सारी पृथ्वी स्वर्ग है और मैं देव हूँ ॥ ६९ ॥ मेरे मन में शिव सदा उदित रहते हैं अतः मन कभी कुमार्ग में नहीं जाता, वाणी झूठ नहीं बोलती और रसना नेत्र कर्ण नासिका त्वचा आदि इन्द्रियां भी विषयातुर नहीं होतीं ॥ ७० ॥

मेरी न कोई जाति है, न कुल है, न देश है। सारे बन्धनों को तोड़ कर मैं विश्वबंधु हो गया हूँ अतः संसार में न तो कोई मेरा शत्रु है न मेरे मन या शरीर में कोई मल या रोग है ॥ ७१ ॥ चूँकि मैं सबका शुभचिन्तक हूँ इसलिये सब श्रद्धापूर्वक मेरी पूजा करते हैं और मुझे न देखने पर फूट फूट कर रोते हैं क्योंकि वे मुझे दयासागर शिव का अवतार समझते हैं ॥ ७२ ॥ किन्तु सत्य यह है कि मैं शंकर और उनके किंकरों का किंकर हूँ। मेरे सदाशिव सत्त्व के धाम हैं, बहुत कम बोलते हैं। वे निराकार और साकार दोनों हैं। उनके हरि, ईश्वर, नारायण विष्णु और ब्रह्म आदि अनेक नाम हैं। मैं उनके आचरणों का अनुकरण कर वैसा ही बनना चाहता हूँ ॥ ७३ ॥ श्रीशंकराचार्य ने लिखा है—

सिद्धं ततोऽद्वैतमते महत्त्वं सत्कर्मणामस्ति न पूजनादेः।
आत्मास्ति नृणां गुणशक्तिसिन्धुः साक्षाच्छिवो नो मलिनः प्रकृत्या ॥७४॥

तस्मात् प्रियाः सन्ति सदुक्तयो मे प्रायो मतस्यास्य मुनीश काश्चित्।
अल्पश्रुताया मम बुद्धिबाह्याः किन्त्वस्ति नो नास्तिक एष वादः॥७५॥

न नास्तिकः सोऽस्ति नरो मते मे ज्ञानार्जने लोकहिते रतो यः।
यष्टापि भक्तोऽपि स नास्तिको यः स्वार्थाय नित्यं हरतेऽन्यशान्तिम्॥७६॥

---

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं।
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः॥
संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो।
यद्यत् कर्म करोमि तत्तदखिलं शंभो तवाराधनम्॥
सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमा।
गांगं वारि समस्तवारिनिवहाः पुण्याः समस्ताः क्रियाः॥
वाचः प्राकृतसंस्कृताः श्रुतिगिरो वाराणसी मेदिनी।
सर्वावस्थितिरस्य वस्तुविषया दृष्टे परब्रह्मणि॥

इससे यह बात सिद्ध हो जाती है कि अद्वैतमत में सदाचार का महत्त्व है, पूजन यजन आदि का नहीं और वह मनुष्य की आत्मा को गुण तथा शक्ति का सागर मानता है। आत्मा स्वभाव से मलिन नहीं अपि तु शंकर के समान सत्त्व और गुण से परिपूर्ण है॥ ७४॥ इसलिये हे मुनिराज! अद्वैतवाद की प्रायः सभी सदुक्तियां मुझे प्रिय लगती हैं। मेरा ज्ञान अल्प है और बुद्धि अविकसित है इसलिये कुछ बातें असंगत प्रतीत होती हैं किन्तु इतना निश्चित है कि यह नास्तिक नहीं है॥ ७५॥ और सच पूछिये तो मेरे मत में ज्ञानार्जन और लोकहित में रत मनुष्य कभी नास्तिक हो नहीं सकता। नास्तिक वे हैं जो पूजा करते हैं, यज्ञ करते हैं, भगवान के सामने अपनी कामनाओं की लम्बी सूची प्रस्तुत करते हैं तथा उनकी पूर्ति के लिये दूसरों की शान्ति का अपहरण करते हैं॥ ७६॥

इति हिन्दीव्याख्यायुत उमोद्वाहमहाकाव्ये षष्ठः सर्गः।

## सप्तमः सर्गः

भक्त्याऽत्र भक्ताः प्रतिपादयन्ति सर्वाघनाशं सकलार्थसिद्धिम् ।
प्रेत्येन्द्रलोके च यथेष्टवासं जन्मान्तरे शर्म विमुक्तिमन्ते ॥ १ ॥

तेषां मते नुस्तपसः श्रुतस्य स्विष्टस्य सूक्तस्य च दानबुद्धेः ।
एकोऽयमर्थः कविभिर्निरुक्तो य उत्तमश्लोकगुणानुवादः ॥ २ ॥

नीहारमादित्य इवाघवृन्दं विष्णोर्यथैका विधुनोति भक्तिः ।
तथा समस्ता अपि संयमाद्या न ब्रह्मविद्भिः कथिता उपायाः ॥ ३ ॥

पराङ्मुखो माधवतो न योगैर्न च व्रतस्नानपरोपकारैः ।
पूतो भवत्यध्वरतो न तीर्थैर्मग्नः सुराकुंभ इवापगायाम् ॥ ४ ॥

---

भक्तों का कथन है कि भक्ति से सब पाप भस्म हो जाते हैं, सारी कामनायें पूर्ण हो जाती हैं, मृत्यु के बाद बहुत दिनों तक स्वर्गवास होता है, दूसरे जन्मों में सुख मिलता है और अन्त में मुक्ति हो जाती है ॥ १ ॥

उनके मत में मनुष्य के तप, ज्ञान, यज्ञ, सूक्ति और दान आदि का एक मात्र शुभफल यह है कि वह भगवान् के गुणानुवाद में लग जाय (भागवत १।५।२२) ॥ २ ॥ जैसे सूर्य कुहरे को समाप्त कर देता है उसी प्रकार अकेली विष्णुभक्ति समस्त पापों को भस्म कर देती है किन्तु ब्रह्मवेत्ताओं द्वारा कहे हुये यम, नियम, संयम आदि सारे उपाय मिल कर भी उतना काम नहीं कर पाते ॥ ३ ॥

केचित् केवलयाभक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥ १५ ॥

न तथा ह्यघवान् राजन् पूयेत तप आदिभिः ।
यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥ १६ ॥

(भागवत ६।१)

न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुद्धयत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतैः ( भागवत ६।२।११ ) ।

हरिविमुख नर योग, व्रत, स्नान, परोपकार, यज्ञ, तीर्थ, दान आदि से पवित्र नहीं हो पाता । जैसे गंगा में डूबा मदिरा का कलश ॥ ४ ॥

नैष्कर्म्यमप्यच्युतभावहीनं न शोभते ज्ञानमलं पवित्रम् ।
वर्णाश्रमाचारतपः श्रुतादौ बहुश्रमस्यास्ति फलं यशः श्रीः ॥ ५ ॥

त्यक्त्वा स्वधर्मं हरिपादपद्मं भजन्नपक्वोपि पतेदधश्चेत् ।
कदापि नो तस्य भवत्यभद्रं न कोपि लाभोऽभजतां स्वधर्मात् ॥ ६ ॥

यथा दहत्यग्निरनिच्छयापि स्पृष्टस्तथा नामभिरस्य भद्रैः ।
पापा अपि घ्नन्ति महान्त्यघानि भवन्ति मुक्ता यमयातनातः ॥ ७ ॥

चौरः सुरापो गुरुतल्पगामी विश्वासघाती पितृमातृहन्ता ।
विषाग्निदो ब्राह्मणभूपगोघ्नो भवत्यरं नामजपेन शुद्धः ॥ ८ ॥

---

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ।
न निष्पुनन्ति राजेन्द्र सुराकुंभमिवापगाः ॥
(६।१।१८ भागवत)

भक्तिहीन निष्कर्मता और पवित्र ज्ञान अशोभन हैं। वर्णाश्रम धर्म के पालन से, तप से और स्वाध्याय में परिश्रम से केवल यश और धन मिलता है। भक्ति वाली वस्तुयें नहीं मिलतीं ॥ ५ ॥

यशः श्रियामेव परिश्रमः परो वर्णाश्रमाचारतपः श्रुतादिषु ।
१२।१२।५३ ॥ नैष्कर्म्यमप्यच्युतभावहीनं १।५।१२ ( भागवत ) ॥

भगवान का भजन करने वाला धर्म को छोड़ कर पतित हो जाय तो भी उसका अमंगल नहीं होता किन्तु धर्म का पालन करने वाले यदि भजन नहीं करते तो उन्हें लाभ और मंगल की आशा छोड़ देनी चाहिये ( भागवत १।५।१७ ॥ ) ॥ ६ ॥ जैसे भूल से स्पर्श करने वालों को भी आग जला देती है उसी प्रकार दुष्ट भाव से भजन करने वालों के भी पापों को हरि भस्म कर देते हैं और उन्हें यमयातना नहीं भोगनी पड़ती ॥ ७ ॥

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥
( भागवत ६।२।२० ) ॥

चोर, शराबी गुरुपत्नीगामी विश्वासघाती, मातापिता की हत्या करने वाले, विष देने वाले, आग लगाने वाले तथा ब्राह्मण राजा और गाय की हत्या करने वाले भी नाम के जप से शीघ्र विशुद्ध हो जाते हैं ॥ ८ ॥

ये दांभिका मत्सरिणश्च हिंस्राः सदा दुराचाररता नृशंसाः ।
हरिद्विषस्ते हरिणा हताश्चेत् स्वर्गापवर्गौ सुगतिं लभन्ते ॥ ९ ॥

अन्ये महापातकिनोऽप्यनिच्छन्नवज्ञया हास्यत ईर्ष्यया वा ।
उक्त्वास्य नामानि भवन्ति पूतास्त्रिद्व्येकवर्णैश्चतुरक्षरैर्वा ॥ १० ॥

सकृन्मनो विष्णुपदारविन्दे निवेशितं यैस्तु गुणानुरागि ।
न ते यमं पाशभृतोऽस्य दूतान् कदापि पश्यन्ति विधूतपापाः ॥ ११ ॥

मालाजटापुण्ड्रदिगम्बरत्वैर्मौनाङ्गपीडाविविधोपवासैः ।
विदन्त्यभीष्टाप्तिमघान्तमेके गुहानिवासाप्लवतीर्थवासैः ॥ १२ ॥

---

पाखण्डी, दूसरों के उत्कर्ष से जलने वाले, हिंसक, दुराचारी, निर्दय और हरि से द्वेष करने वाले भी हरि का नाम जपने पर तथा उनके हाथ से मारे जाने पर स्वर्ग मोक्ष और शुभ गति पाते हैं ( भागवतमाहात्म्य ४।११, १२, १३ ) ॥ ९ ॥

अन्य महापातकी भी अनिच्छा से, द्वेष से, वैरभाव से, उपहास में और तान आलाप आदि में भी एक, दो, तीन, चार अक्षरों वाले हरि के नामों के उच्चारण मात्र से निष्पाप हो जाते हैं ॥ १० ॥ जिसने अपने गुणानुरागी मन को एक बार भी हरि में लगा दिया उसे यम और यमदूतों के पास नहीं जाना पड़ता। सारांश यह कि पाप करते रहो, नाम जपते रहो, पाप भस्म होते चले जायँगे ॥ ११ ॥

सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥
अज्ञानादथवा ज्ञानादुत्तमश्लोक नाम यत् ।
संकीर्तितमघं पुंसां दहेदेधो यथानलः ॥
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥
अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद् व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥
एतेनैव ह्यघोनोस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणायेति जगाद चतुरक्षरम् ॥

(भागवत ६।२)

आहुः परे स्तोत्रमिदं न युक्तं भक्तेश्च नाम्नोऽतिशयोक्तिपूर्णम् ।
पुण्यं लभन्ते न जपेन पापा न देवगाथाश्रवणार्चनाद्यैः ॥ १३ ॥

निशम्य नामानि गुणानुदन्तान् सतां तपस्त्यागयशोधनानाम् ।
उदेत्यवश्यं हृदि शुद्धभावो भवत्यथो सत्त्वगुणाभिवृद्धिः ॥ १४ ॥

सत्त्वस्य वृद्ध्या तमसो विनाशादवाप्यते देवकृपा च नूनम् ।
परञ्च नो सन्ति कथाः सुराणां सत्त्वात्मिका विष्णुविधीश्वराणाम् ॥ १५ ॥

---

कुछ लोगों का विश्वास है कि माला, जटा, त्रिपुण्ड्र, ऊर्ध्वपुण्ड्र, नग्नता, मौन, उपवास आदि के द्वारा तथा शरीरपीडा, गुहावास, स्नान और तीर्थवास आदि से अभीष्ट लाभ और पापनाश होता है ॥ १२ ॥ पण्डितराज जगन्नाथ ने गंगालहरी में लिखा है कि जलक्रीड़ा के समय रानियों के स्तन में लगी कस्तूरी का गंगाजल से स्पर्श होने पर वे मृग इन्द्र के पूज्य बन कर स्वर्ग में विहार करने लगते हैं जिनकी नाभि से कस्तूरी ली गई थी। दूसरे कवि का कथन है कि सौ योजन दूर से गंगा शब्द कहने पर भी सारे पाप नष्ट हो जाते हैं और विष्णुलोक मिल जाता है।

गंगागंगेति यो ब्रूयाद् योजनानां शतैरपि।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥

पुराणों में तिलक, माला, जटा और व्रत आदि के संबन्ध में ऐसी सैकड़ों कथायें लिखी हैं॥ १२ ॥

विरोधियों का कथन है कि भक्ति और नाम की ये कथायें अतिशयोक्ति पूर्ण होने से अनुपयुक्त हैं। पापी मनुष्य किसी के जप से, देवार्चन से या कथा सुनने से अपाप और पुण्यात्मा नहीं हो सकता। पापों का फल भोगना ही पड़ता है ॥ १३ ॥

सज्जनों, तपस्वियों, त्यागियों और यशोधनों के नामों, गुणों और इतिहासों को सुन कर हृदय में निश्चित रूप से शुद्ध भाव का उदय और सत्त्व गुण की वृद्धि से रज और तम का नाश होता है तथा देवों की कृपा प्राप्त होती है परन्तु देवों की और विष्णु, विधि शंकर आदि की कथायें सत्त्वात्मक नहीं हैं ॥ १५ ॥ इसलिये विष्णु के और इन्द्र, चन्द्रमा, मित्र,

न संभवातो नरसत्त्ववृद्धिर्गुणानुवादश्रवणेन विष्णोः।
नेन्द्रेन्दुमित्रावरुणानिलानां ब्रह्मार्कगुर्वादिसुरोत्तमानाम् ॥ १६ ॥

वृन्दोर्वशीवाङ्ममता अहल्यां सुग्रीववालीजननीञ्च ताराम्।
दृष्ट्वाञ्जनां देववरैः कृतं यन्नोदेति तस्य श्रवणेन भक्तिः ॥ १७ ॥

न वस्तुतः सन्ति सुराः सदोषा न लोकमान्या मुनयो न देव्यः।
परञ्च दोषाः कविभिः सदोषैः क्षिप्ता हठात् सन्ति समेष्वनेके ॥ १८ ॥

एतेषु दोषेष्वृतमस्ति तावद् यावत् सुवर्णस्य सुमेरुशैले।
स्वादूदकस्येक्षुरसस्य दध्नो मद्यस्य दुग्धस्य घृतस्य चाब्धौ ॥ १९ ॥

ये मानवाः पापविनाशहेतोः स्पृशन्त्यपस्तीर्थमिति प्रवृत्ताः।
तेषां तु तोषो हृदि केवलोऽयं न पावयिष्यन्ति हि पापमापः ॥ २० ॥

स्पृष्टं हि यद्यद् गुणवद्भिरंभस्तत्तत् पृथिव्यामिह तीर्थमुक्तम्।
तस्माद् गुणानेव परैमि तीर्थान्यापस्तु निस्संशयमाप एव ॥ २१ ॥

---

वरुण, वायु, ब्रह्मा, सूर्य बृहस्पति आदि प्रधान देवों के गुणानुवाद के श्रवण से मनुष्य के हृदय में सत्त्वगुण की वृद्धि असंभव है ॥ १६ ॥

वृन्दा के साथ विष्णु ने, उर्वशी से मित्रावरुण ने, सरस्वती से ब्रह्मा ने ममता से देवगुरु बृहस्पति ने, अहल्या से देवराज इन्द्र ने, सुग्रीव और वाली की माता से सूर्य और सुरेश ने, तारा से द्विजराज चन्द्रमा ने और हनुमान की माता अंजना से पवमान पवन ने जो किया उसके श्रवण और मनन से हृदय में भक्ति का उदय नहीं होता ॥ १७ ॥ सत्य यह है कि देवों, देवियों, परमेश्वर और लोकमान्य मुनियों में कोई दोष नहीं है। वे सब निर्दोषता की साक्षात् मूर्ति हैं परन्तु परम स्वतन्त्र और सदोष कवियों ने इन सबों में हठपूर्वक अनेक दोष प्रतिष्ठित किये हैं ॥ १८ ॥ परन्तु इन सारे काल्पनिक दोषों में सत्य उतना ही है जितना उनके काल्पनिक सोने के एक लाख योजन ऊँचे सुमेरु पर्वत में तथा स्वादुजल, गन्ने के रस, दही, मदिरा, दूध और घी के महासागरों में ॥ १९ ॥ जो लोग पापों के विनाश के लिये तीर्थों समुद्रों और नदियों में नहाते हैं वे हृदय से भले ही सन्तुष्ट हो जायं किन्तु पानी पापों को समाप्त नहीं कर सकता ॥ २० ॥ महान् पुरुषों से स्पृष्ट जल और स्थल तीर्थ मान लिये जाते हैं अतः गुण ही तीर्थ हैं। जल तो बस जल है ( ये दो श्लोक महाकवि अश्वघोष के बुद्धचरित के हैं ) ॥ २१ ॥

कैवर्तका नित्यझषाशना ये वसन्ति गंगायमुनादितीरे।
तीरे च भेका मकरा जलौका न ते लभन्ते सुगतिञ्च नाकम् ॥ २२ ॥
गुहाजटाभस्मदिगम्बरत्वैः पञ्चाग्निपर्णोदकसेवया वा।
तुष्टाः शृगालर्क्षशुनः खराश्नो पश्यन्ति शैलाञ्छबरानजादीन् ॥ २३ ॥

---

गंगा यमुना आदि पवित्र नदियों के तट पर रहने से मत्स्यभोजी केवट और उनके जल में रहने वाले मेंढक, मगर, जोंक आदि जन्तु स्वर्ग और मोक्ष के अधिकारी नहीं हो जाते ॥ २२ ॥ गुहानिवास से, जटाभस्म धारण से, नग्नता से, पंचाग्नि सेवन से और पत्ता खाने से सन्तुष्ट लोगों को क्रमशः सियार चूहे भालू कुत्ते गधे पर्वत किरात और बकरे आदि को देखना चाहिये ॥ २३ ॥

गरुडपुराण का कथन है कि जन्म से मरण पर्यन्त गंगादि पवित्र नदियों पर रहने वाले मल्लाह और जलजन्तु योगी नहीं हो जाते। कुछ अज्ञानी व्रत उपवास से त्रस्त हैं, कुछ जप पाठ में लगे हैं, कुछ कर्मकाण्ड की लम्बी क्रियाओं के मंत्रोच्चारण और होम में फंसे हैं तथा कुछ जटा-भार एवं मृगचर्म के पाखण्ड में लगे हैं। उन्हें पता नहीं कि दिगम्बर रहने तथा धूल राख पोतने से गधे और कुत्ते वैरागी, योगी नहीं हो जाते तथा सूखी पत्ती खाने एवं बिल में रहने से मृग बकरे गीदड़ और चूहे तपस्वी नहीं कहे जाते। ये कर्म प्रदर्शन और लोकरंजन मात्र हैं, मुक्ति तो केवल ज्ञान से होती है। वेदशास्त्र का ज्ञाता यदि सदाचारी नहीं है तो उसका सारा प्रवचन कौवे का कांव कांव है। अलंकारों और छन्दों के पण्डित कवि सत्य को उसी प्रकार नही जानते जैसे कलछुल पाक के स्वाद को नहीं जानती। जैसे दीप कहने से अन्धकार समाप्त नहीं होता उसी प्रकार शब्द-जाल से मोह नहीं जाता। जैसे अमृत से तृप्त मनुष्य के लिये जल अनावश्यक है उसी प्रकार तत्वज्ञानी के लिये ग्रन्थ निष्प्रयोजन हैं। मुक्ति पढ़ने से नहीं अपि तु उस ज्ञान सरोवर में नहाने से मिलती है जो सत्यरूपी निर्मल जल से परिपूर्ण है ॥"

"आजन्ममरणान्तं च गंगादितटिनी स्थिताः।
मण्डूकमत्स्यप्रमुखा योगिनस्ते भवन्ति किम् ॥
क्रियायासपराः केचित् व्रतचर्यादि संयुताः।
अज्ञानसंवृतात्मानः संचरन्ति प्रतारकाः॥

हरिद्विषश्चेद् धरिणा हतत्वाद् व्रजन्ति पापा अपि विष्णुलोकम् ।
न को ऽपि गन्ता नरकान् यतो नून् निहन्ति सर्वान् हरिरेव नित्यम् ॥२४॥

---

नाममात्रेण सन्तुष्टाः कर्मकाण्डरता नराः ।
मंत्रोच्चारणहोमाद्यैर्भ्रामिताः क्रतुविस्तरैः ॥
जटाभाराजिनैर्युक्ता दांभिका वेषधारिणः ।
भ्रमन्ति ज्ञानिवल्लोके भ्रामयन्ति जनानपि ॥
गृहारण्यसमा लोके गतव्रीडादिगम्बराः ।
चरन्ति गर्दभाद्याश्च विरक्ताः किं भवन्ति ते ॥
मृद्भस्मोद्धूलनादेव मुक्ताः स्युर्यदि मानवाः ।
मृद्भस्मवासी नित्यं श्वा स किं मुक्तो भविष्यति ॥
तृणपर्णोदकाहाराः सततं वनवासिनः ।
जम्बूकाखुमृगाद्याश्च तापसास्ते भवन्ति किम् ॥
तस्मादेतत् समं कर्मं लोकरंजनकारकम् ।
मोक्षस्य कारणं साक्षात् तत्त्वज्ञानं खगेश्वर ॥
वेदागमपुराणज्ञः सदाचारपरो न यः ।
विडम्बकस्य तस्यैतत् सर्वं काकस्य भाषितम् ॥
वाक्यच्छन्दोनिबन्धेन काव्यालकारशोभिताः ।
न जानन्ति परं तत्त्वं दर्वी पाकरसं यथा ॥
संसारमोहनाशाय शब्दबोधो न हि क्षमः ।
न निवर्तेत तिमिरं कदाचिद् दीपवार्तया ॥
यथामृतेन तृप्तस्य न जलेन प्रयोजनम् ।
तत्त्वज्ञस्य तथा तार्क्ष्य न शास्त्रेण प्रयोजनम् ॥
न वेदाध्ययनान्मुक्तिः न शास्त्रपठनादपि ।
ज्ञानादेव हि कैवल्यं नान्यथा विनतात्मज ॥
ज्ञानह्रदे सत्यजले रागद्वेषमलापहे ।
यः स्नाति मानसे तीर्थे स वै मोक्षमवाप्नुयात् ॥ २३ ॥

अनेक भक्तों का कथन है कि महान् पापी भी यदि शत्रुबुद्धि से हरि का स्मरण करता है और उनके हाथ से मारा जाता है तो वह पापों से मुक्त होकर मोक्ष पाता है किन्तु ऐसा होने पर तो कोई भी नरक में नहीं जायगा क्योंकि प्राणी चाहे जैसे मरे, मारते तो सबको हरि ही हैं ॥ २४ ॥

मते मुनीनां रजसि स्थिता ये प्रमादहिंसाऽनृतकैतवाद्यौ ।
हता अपीशेन रुषा स्मरंस्तं तिष्ठन्ति मध्ये बहुकष्टतप्ताः ॥ २५ ॥

अज्ञानपारुष्यमदच्छलेर्ष्यामोहादिगेहे तमसि स्थिता ये ।
दृष्ट्वा स्मरंश्चापि मुहुर्महेशं यान्त्यासुरीं योनिमधोगतिं ते ॥ २६ ॥

क्षिपत्यजस्रं भगवान् खलांस्तान् रजस्तमःस्थान्नरकेष्वधोऽधः ।
कदापि नो दुष्कृतिनो लभन्ते शुभां गतिं विश्वसृजं द्विषन्तः ॥ २७ ॥

स एव विष्णोर्लभतेऽनुकम्पां जितेन्द्रियो योऽस्ति नरः प्रशान्तः ।
यश्चेतनानां निरतः समेषां हिते सदा भक्तियुतोऽस्ति साधुः ॥ २८ ॥

---

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥(गीता)

मुनियों का कथन है कि जो मनुष्य प्रमाद, हिंसा, झूठ और कपट आदि रजोगुणों में स्थित हैं और हरि के द्वेषी हैं वे उनके हाथ से मारे जाने पर भी मुक्त नहीं हो सकते अपि तु बीच में लटके रहते हैं ॥ २५ ॥ जो अज्ञान क्रूरता मद छल ईर्ष्या मोह आदि के गृह तमोगुण में स्थित हैं वे ईश्वर का बार बार दर्शन और स्मरण करने पर भी आसुरी योनियों और अधोगति को प्राप्त होते हैं ॥ २६ ॥ रज और तम में स्थित, दुष्कर्मों में आसक्त और हरिद्रोही खलों को हरि कभी शुभ गति नहीं देते । सदा नरकों और नीच योनियों में फेंकते रहते हैं ॥ २७ ॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १६।१९ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ १६।२० ॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ ७।१५ ॥ (गीता)

भगवान् की कृपा उसी को प्राप्त होती है जो मनुष्य जितेन्द्रिय, प्रशान्त सब प्राणियों के हित में सर्वदा तत्पर, विशुद्ध भक्ति से युत और साधु है ॥ २८ ॥

वैद्यस्य नो दर्शनतो विमुक्ता भवन्ति यद्वत् सगदा गदेभ्यः ।
मूर्तेस्तथा दर्शनतो हरेर्नो भवन्ति पापाः सुखनाकभाजः ॥ २९ ॥

ईशावतारा बहवश्च तेषां दृष्टा रुदन्तस्तनयाश्च दाराः ।
ताताश्च दासा अतएव मूर्त्तेर्न दर्शनात्तस्य भवत्यघान्तम् ॥ ३० ॥

तस्यानुतिष्ठन्ति सदा मतं ये विशुद्धभावा अपि दूरगास्ते ।
भवन्ति जालाद् विपदां विमुक्ता न बान्धवाः पापपराः पुरःस्थाः ॥३१॥

संजायते चेतसि सत्त्ववृद्धिर्द्वारेषु सर्वेषु तनोः प्रकाशः ।
यदा विषादश्च भवत्यघे स्वे तदैव शक्योर्ध्वगतिः शिवाप्तिः ॥ ३२ ॥

---

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धयापरयोपेतास्ते मे युक्तमा मताः ॥ १२।२ ॥
संनियम्येन्द्रियग्रामं सर्वभूतहिते रताः ॥ १२।४ ॥
जितात्मनः प्रशान्तस्य परमात्मा समाहितः ॥ ६।७ ॥ (गीता)

जैसे रोगी वैद्य के दर्शन से नीरोग नहीं होता उसी प्रकार पापी हरि के दर्शन से सुख और स्वर्ग के भागी नहीं होते ॥ २९ ॥ ईश्वर के अनेक अवतारों को तथा उनके पुत्रों, पत्नियों, पिताओं और दासादिकों को रोते देखा गया है अतः उनकी मूर्ति के या उनके दर्शन से पाप नहीं कटते ॥ ३० ॥ जिनके विचार और कर्म विशुद्ध हैं और जो शास्त्रों में कथित उनके आदेशों का पालन करते हैं वे दूर रहने पर भी विपत्तिजाल से मुक्त हो जाते हैं किन्तु पाप में रत बान्धव भी, सामने रहने पर भी पापों से मुक्त नहीं हो पाते ॥ ३१ ॥

वैद्यदर्शनमात्रेण विनाप्यौषधसेवनम् ।
रोगमुक्तिर्न लोकानां निर्वाणोऽपि तथाविधः ॥
दुरूहस्य हि योगस्य सम्यगाचरणं विना ।
न संभवति मुक्तिर्वै केवलं मम दर्शनात् ॥
मम ये तु मतं नित्यमनुतिष्ठन्ति मानवाः ।
मुच्यन्ते सर्वदुःखेभ्यो मद्दर्शनमृतेऽपि च ॥
मद्धर्मचारिणो मां हि वीक्षन्ते दूरगा अपि ।
मद्धर्मविरता मां नो पश्यन्ति हि पुर स्थिताः ॥

अश्वघोष का बुद्धचरित

सप्तमः सर्गः

वदन्ति मुख्यान् नरकस्य हेतून् योगेश्वराः कामकोपलोभान् ।
त्यक्तानि यैस्तानि त एव धीराः श्रेयःपथे यान्ति रता न पापे ॥ ३३ ॥

भवत्यधर्मस्य यदाऽभिवृद्धिर्ग्लानिश्च धर्मस्य तदाऽवतीर्य ।
करोति धर्मस्य सतां महेशस्त्राणं स्वयं दुर्जनपापनाशम् ॥ ३४ ॥

---

जब मन में सत्त्वगुण की वृद्धि होती है, शरीर के सब द्वार प्रकाश से परिपूर्ण हो जाते हैं और अपने पापों के प्रति घोर पश्चात्ताप होता है तभी ऊर्ध्वगति की और हरि की प्राप्ति होती है ॥३२॥ योगेश्वरों का कथन है कि काम कोप और लोभ नरक के मुख्य हेतु हैं। इन तीनों से दूर रहने वाले धीर पुरुषों पर ही हरि की कृपा होती है, पापियों पर नहीं ॥ ३३ ॥

गीता का कथन है कि हरि की प्राप्ति एवं कल्याण के लिये रज और तम को क्षीण करना अत्यावश्यक है। इनके बढ़ने पर मोह, अज्ञान और दुःख की वृद्धि होती है। ये ही धूम, रात्रि दक्षिणायन और नरक हैं। इनमें मरने पर अधोगति होती है। सत्त्वगुण प्रकाशक है। वह मन और शरीर को स्वस्थ रखता है तथा सुख और ज्ञान को बढ़ाता हैं। उसकी वृद्धि में मरने वाले की ऊर्ध्वगति होती है और बाद में उत्तम स्थिति में जन्म होता है। सत्त्वगुण ही उत्तरायण, शुक्लपक्ष, दिवस, अग्नि, ज्योति, काशी और अयोध्या आदि है।

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४।१४ ॥
कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १४।१६ ॥
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १४।१८ ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ १६।२१ ॥
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो यति परां गतिम् ॥ १६।२२ ॥
काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३।३७ ॥

अतोऽस्ति यः सोढुमिहैव शक्तः पूर्वं मृतेः कामरुडादिवेगान् ।
विनश्वरान् मुञ्चति दुःखहेतून् हृषीकभोगानपि नित्ययुक्तः ॥ ३५ ॥
य आत्मवत् पश्यति लोकदुःखं नरो न कोऽप्युद्विजते च यस्मात् ।
शुद्ध्यै धियो यः स्मरतोश्वराणां सतां चरित्रं नियमाद् यतात्मा ॥ ३६ ॥
कर्माणि सर्वाणि सदा समेषां पश्यन् फल यच्छति नूनमोशः ।
न क्षोयते कर्म कदाप्यभुक्तं मत्वेति योऽत्यन्तमघाद्बिभेति ॥ ३७ ॥
सदा सदाचार परो हृदिस्थं सदाशिवं पूजयति स्वकृत्यैः ।
विज्ञानदोपेन मनोऽन्धकारं तस्येश्वरो नाशयति प्रसन्नः ॥ ३८ ॥
त्यक्त्वा शरीरं स पुनर्मुनीनां लक्ष्मीवतां याति गृहं सतां वा ।
तत्रापि बुद्धि लभते पवित्रां तामेव शान्ति च हरिप्रसादात् ॥ ३९ ॥
भवन्ति सर्वेऽपि ततश्च शब्दास्तस्मै हरेर्नामसमाः पवित्राः ।
हरिद्विषो दुष्कृतिनो विमूढा भवन्त्यवश्यं हरिकोपभाजः ॥ ४० ॥

---

जब अधर्म की वृद्धि और धर्म की ग्लानि होती है उस समय हरि स्वयं अवतार लेकर सन्तों और धर्म की रक्षा तथा पापियों का नाश करते हैं ॥ ३४ ॥ अतः जो मनुष्य मरने के पूर्व इस शरीर के काम क्रोधादि वेगों को रोकता है, दुःख के मूल नश्वर भोगों से दूर रहता है, सन्मार्गगामी होता है ॥ ३५ ॥ जो सबके क्लेशों को अपना क्लेश समझता है, जिससे कोई मनुष्य ऊबता नहीं, जो बुद्धि की शुद्धि के लिये ईश्वर, विद्वानों तथा साधुओं का सदा स्मरण करता है इन्द्रियों को अपने वश में रखता है ॥ ३६ ॥ जो यह सोचकर दुष्कर्मों से अतिशय डरता है कि हरि सबके कर्मों को देख रहे हैं, उनका फल अवश्य देते हैं और फल भोगे विना कर्म समाप्त नहीं होते ॥ ३७ ॥ जो सर्वदा सदाचार में तत्पर रह कर अपने कर्मों द्वारा हृदय में स्थित सदाशिव की पूजा करता है उस पर प्रसन्न होकर वे विज्ञान रूपी दीपक द्वारा मन के अन्धकार को समाप्त कर देते हैं ॥ ३८ ॥ इसके बाद शरीर छोड़ने पर वह पुनः पवित्र श्रीमानों या योगियों के घर में जन्म लेता है और हरि की कृपा से वहाँ भी वही पवित्र बुद्धि और शान्ति पाता है ॥ ३९ ॥ तब उसके लिये सब शब्द हरि के नाम की भाँति पवित्र हो जाते हैं परन्तु हरि से द्वेष करने वाले मूढ़ों और पापियों पर उनकी कृपा असंभव है। वे तो निश्चित रूप से हरिकोप के भाजन होते हैं ॥ ४० ॥

ब्रुवन्त्यतो वास्तविकेशभक्ताः कदापि नो वाङ् मम वक्त्यसत्यम् ।
नाघे हृषीकाणि पतन्ति यस्माज्जाता परेशेऽस्ति दृढा प्रतीतिः ॥ ४१ ॥

---

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ४।७ ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ४।८ ॥
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ ५।२२ ॥
शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ ५।२३ ॥
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मनः सर्वभूतहितेरताः ॥ ५।२५ ॥
अनपेक्षः शुचिर्दक्षो यो मद्भक्तः स मे प्रियः ॥ १२।१६ ॥
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ॥ १२।१३ ॥
यस्मान्नोद्विजते लोको यो मद्भक्तः स मे प्रियः ॥ १२।१५ ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ६।३२ ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगन्तं येन मामुपयान्ति ते ॥ १०।१० ॥
तेषामेवानुकम्पार्थमहज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥१०।११ ॥
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।
अथवा योगिनामेव कुले भवति धीमताम् ॥ ६।४२ ॥
यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ८।६ ॥
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६।१६ ॥
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥१८।४६॥ ( गीता )

इसीलिये परमेश्वर के वास्तविक भक्त कहते हैं कि मेरी वाणी कभी मिथ्या नहीं बोलती और इन्द्रियाँ कभी कुमार्ग में नहीं जाती क्योंकि मुझे ईश्वर की सत्ता में दृढ़ विश्वास हो गया है ॥ ४१ ॥ दुराचारी मनुष्य भी

प्रेम्णा दुराचारपरा अपीशं भजन् भवन्त्यच्छहृषीकचित्ताः ।
पतन्ति ते नैव पुनः कुमार्गे दृष्टा मयेयं हरिभक्तिशक्तिः ॥ ४२ ॥

यतीश्वरा अप्यवदन् स्वरूपे स्थितिं मनःक्लेशदवृत्तिरोधात् ।
क्लेशेष्वविद्यां च विदुः प्रधानां करोति बुद्धिं विकृतां नृणां या ॥ ४३ ॥

वदन्ति सत्येन फलं क्रियायास्तेऽस्तेयतः सर्वसुरत्नलाभम् ।
अहिंसया जीवनिकायमैत्रीं सन्तोषतोऽत्रैव सुखं वरेण्यम् ॥ ४४ ॥

---

प्रेम से भजन करने पर सदाचारी हो जाते हैं। उनकी इन्द्रियाँ और चित्त पुनः कुमार्ग में नहीं जाते। हरिभक्ति की यह शक्ति प्रत्यक्ष है ॥ ४२ ॥

न भारती मेंऽगमृषोपलक्ष्यते न वै क्वचिन्मे
मनसो मृषा गतिः । न मे हृषीकाणि पतन्त्यसत्पथे
यतो हृदौत्कण्ठ्यवता धृतो हरिः ( भागवत २।६।३३ ) ॥
अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ९।३० ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्ति निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ९।३१ (गीता) ॥

योगीश्वरों का भी कथन है कि चित्त की अशुभ वृत्तियों के निरोध से मनुष्य अपने वास्तव रूप में स्थित हो जाता है और बुद्धि को विकृत करने वाली अविद्या उससे दूर हट जाती है ॥ ४३ ॥

वे कहते हैं कि सत्यवादी को क्रिया का फल मिलता है। चोरी न करने से सब अनमोल रत्न मिल जाते हैं, अहिंसा से सब जीवों की मैत्री और शुभकामना प्राप्त होती है और सन्तोष से इसी लोक में उत्तम सुख मिलते हैं। मनुष्य को रत्न और सुख की वास्तविक परिभाषा जाननी चाहिये ॥ ४४ ॥

अहिंसा प्रतिष्ठायां तत्संनिधौ वैरत्यागः २।३५
सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् २।३७
अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् २।३७
सन्तोषादनुत्तमसुखलाभः २।४२ पातञ्जलयोगदर्शन

अतः हिंसक, मिथ्यावादी, चोर, और असन्तोषी नर हरिकृपा के पात्र नहीं हो सकते ॥ ४४ ॥ उनके मत से जो साधक विषयविरक्त होकर दीर्घ

तेषां मते सन्ततदीर्घकालं कुर्वन्ति येऽभ्यासममन्दवेगाः ।
सत्कारयुक्ता यमसंयमादौ महेश्वरे दुर्विषये विरागाः ॥ ४५ ॥

त एव लोके यश आत्मशान्ति ज्ञानं च विश्वेशकृपां लभन्ते ।
नाकर्मठा नो कुमृतिप्रसक्ता द्विषो हरेस्तेन हताः कदापि ॥ ४६ ॥

सर्वाणि कर्माणि गृहं स्वपत्नीं देशादिमोहं च विहाय बन्धून् ।
संन्यासिनः स्वाध्ययनं च भैक्षं निःश्रेयसार्थं कथयन्ति वर्यम् ॥ ४७ ॥

यज्ञादृते कर्म समं जगत्या निरर्थकं यज्ञपरा विदन्ति ।
तथैव भक्ता अपि कर्म हित्वा ब्रुवन्ति विष्णुस्मरणं वरेण्यम् ॥ ४८ ॥

योगेश्वरैः किन्तु मनीषिमान्यैस्तेषां त्रयाणामपि धारणानाम् ।
उक्तं विरोधे बहु कर्मशूरैः प्रियं मनोहारि हितं च सत्यम् ॥ ४९ ॥

सन्त्यज्य कर्माणि गृहञ्च बन्धून् निष्कर्मतां नैव नरा लभन्ते ।
त्यागेऽपि तेषां सुहृदो विपक्षा आयान्ति सर्वत्र गृहप्रपञ्चाः ॥ ५० ॥

---

काल तक, तीव्र वेग से निरन्तर और श्रद्धा पूर्वक अभ्यास करते हैं, यम नियम आदि का पालन करते हैं ॥ ४५ ॥ वे ही लोक में यश, आत्मशान्ति ज्ञान, और ईश्वर कृपा प्राप्त करते हैं। अकर्मठ, कुमार्गों में रत, हरिद्वेषी और हरि के हाथ से मारे जाने वाले कभी नहीं ॥ ४६ ॥

स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः १।१४
तीव्रसंवेगानामासन्नः १।२१ ( पातंजलयोगसूत्र ) ॥

संन्यासियों का कथन है कि मुक्ति की प्राप्ति के लिये सब कर्मों का, गृह का, पत्नी का, बन्धुओं का और स्वदेश आदि के मोह का परित्याग कर अपनी आत्मा का अध्ययन करना और भिक्षा से जीवन बिताना सर्व श्रेष्ठ है ॥ ४७ ॥ याजकों का कथन है कि सब कर्म छोड़ कर यज्ञ करो। यज्ञातिरिक्त कर्म व्यर्थ हैं और भक्त कहते हैं कि सब कर्म छोड़ कर भगवान् का भजन करो। यही श्रेष्ठतम कर्म है ॥ ४८ ॥ किन्तु मनोषियों के पूज्य, लोकमान्य और कर्मशूर योगेश्वरों ने इन तीनों के विरुद्ध लोकहितकारी, सत्य, प्रिय और मनोहारिणी अनेक बातें बताई हैं ॥ ४९ ॥ वे कहते हैं कि कोई मनुष्य अपने गांव, घर, पुत्र, पत्नी और स्वजनों को छोड़ कर भाग जाने से त्यागी नहीं हो पाता क्योंकि वह जहाँ भी जाता है, वहाँ नये नये स्वजन, मित्र, शत्रु, गृह और गृहप्रपंच उपस्थित हो जाते हैं ॥ ५० ॥ और

कदापि कोऽपि क्षणमप्यकर्मा नरो न तिष्ठत्यतिसात्त्विकोऽपि।
भूतानि यान्ति प्रकृतिं बलाढ्याः कर्षन्ति विद्वांसमपीन्द्रियार्थाः ॥ ५१ ॥

अतो मृषाचारमतीवमूढं वदन्ति निन्दन्ति च तं यतीशाः।
स्मरत्यजस्रं विषयान् हृदा यः कर्मेन्द्रियाण्येव हठान्नियम्य ॥ ५२ ॥

कर्माणि हित्वा न मखो न भक्तिर्न देहयात्राऽपि च सिद्ध्यतीति।
सम्पूर्णकामा अपि कर्म सिद्धाः कुर्वन्ति नित्यं जनशिक्षणार्थम् ॥ ५३ ॥

ज्ञात्वा सधूमानलवत् समस्तं सदोषकर्माण्यपि नो त्यजन्ति।
न मन्वते च श्रमतो विभीतानकर्मणस्तानलसांश्च साधून् ॥ ५४ ॥

---

सात्त्विक मनुष्य भी मुख से भले ही त्यागी बन जाय परन्तु कर्मों को एक क्षण के लिये भी छोड़ नहीं पाता क्योंकि प्रकृति किसी के वश में नहीं है। इन्द्रियों के विषय बड़े बलवान् हैं। वे त्यागियों और विद्वानों को भी बरबस अपनी ओर खींच लेते हैं ॥ ५१ ॥ वे त्यागी पुरुष हठ पूर्वक हाथ पैर आदि कर्मेन्द्रियों को तो रोक लेते हैं परन्तु मन से दिनरात प्रत्येक विषय का स्मरण किया करते हैं। अतः सन्त लोग उन्हें मिथ्याचारी और विमूढ़ कहते हुये उनकी निन्दा करते हैं ॥ ५२ ॥

न कर्मणामनारंभात् नैष्कर्म्यं पुरुषोऽश्नुते।
न च संन्यसनादेव सिद्धिं समधिगच्छति ३।४ ॥
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः २।५ ॥
कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ३।६ ॥
यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ३।७ ॥ (गीता)

कर्मों का परित्याग करने पर न यज्ञों की पूर्ति हो पाती है, न भक्ति हो पाती है, न देहयात्रा के लिये भोजन मिल पाता है। इसलिये जिनकी सारी कामनायें पूर्ण हो चुकी हैं वे सिद्ध पुरुष भी संसार को शिक्षा देने के लिये कर्म में तत्पर रहते हैं ॥ ५३ ॥ धूम से विहीन अग्नि की भाँति दोष से रहित कर्म भी दुर्लभ हैं। कृषि में ही नहीं, सांस लेने में भी जीव-हत्या होती है अतः वे सदोष कर्मों का भी त्याग नहीं करते और शरीरश्रम से भागने वाले कर्मविहीन आलसियों को साधु नहीं मानते ॥ ५४ ॥

ऊचुस्ततो ये भगवान् पुनाति त्रिद्वयेकवर्णैरपि घोरपापान् ।
वर्णाश्रमाचारतपःश्रुतादौ परिश्रमस्यास्ति फलं यशः श्रीः ॥ ५५ ॥

---

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ३।८ ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ ३।२० ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ३।२१ ॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ ३।२२ ॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ ३।२४ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ ३।२६ ॥

क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ ४।१२ ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ ४।१५ ॥

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ ६।१ ॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥ ६।३ ॥

तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ ५।२ ॥

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ १८।७ ॥

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ॥ १८।४८ ॥

दुःखमित्येव यत्कर्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ १८।८ ॥

श्रेष्ठाऽस्ति धर्मादपि विष्णुभक्तिर्विहाय कर्माणि रतिर्जपादौ।
नश्यन्ति पापानि जटाप्लवाद्यैर्न सन्ति ते दूरदृशो मते नः ॥ ५६ ॥

---

अतः जो कहते हैं कि दो, तीन, चार अक्षर वाले शब्दों का आलस्य और कुभाव से उच्चारण करने पर भगवान महान् पापियों को भी तार देते हैं, वर्णाश्रम धर्म और स्वाध्याय आदि में परिश्रम का फल केवल धन और यश है ॥ ५५ ॥ कर्मों का परित्याग कर नाम जपते रहना धर्माचरण से श्रेष्ठ है और जटा, माला, स्नान आदि से पाप नष्ट हो जाते हैं वे लोग हमारी दृष्टि में दूरदर्शी नहीं हैं ॥ ५६ ॥

इति हिन्दीव्याख्यायुत उमोद्वाहमहाकाव्ये सप्तमः सर्गः।

## अष्टमः सर्गः

लोकायता आहुरदृष्ट ईशो मिथ्या च दृष्टं जगदस्ति सत्यम् ।
आत्मास्तिचैतन्यविशिष्टदेहो भूवायुतोयानलयोगजातः ॥ १ ॥

क्षुत्तृट्क्षताद्याकुलिते शरीरे भवत्यरं व्याकुल एष आत्मा ।
सुस्पर्शवाग्गन्धरसैः सुरूपैर्हृष्टस्ततो नास्ति पृथक् स देहात् ॥ २ ॥

नापक्वबीजं जनने समर्थं तदेव पक्वं जनकत्वमेति ।
सा शक्तिरायाति जडेभ्य एव तस्मिन् धरासूर्यमरुज्जलेभ्यः ॥ ३ ॥

जीवन्ति वातान्नजलप्रकाशैस्तेषामभावे च भवन्त्यशक्ताः ।
अन्ते म्रियन्ते च समेऽपि जीवा नूनं जडाश्चेतनहेतवोऽतः ॥ ४ ॥

---

अद्वैतवेदान्ती कहते हैं कि 'ब्रह्म सत्यं जगन्मिथ्या' किन्तु लोकायत नास्तिकों का कथन है कि जगत् सत्यं ब्रह्म मिथ्या'। क्योंकि जगत् का अनुभव पांचो ज्ञानेद्रियों से हो रहा है अतः उसे मिथ्या कहना हठ है। ब्रह्म को, ब्रह्मा को और विष्णु शिव इन्द्र वरुण आदि देवों को आज तक किसी ने नहीं देखा है, नहीं जाना है इसलिये वे सब के सब काल्पनिक और मिथ्या हैं। पृथ्वी वायु जल और अग्नि के संयोग से चेतन शरीर उत्पन्न होता है। यह शरीर ही आत्मा है। आत्मा इससे पृथक् कोई सूक्ष्म पदार्थ नहीं है ॥ १ ॥ भूख, प्यास, घाव, फोडा, आग आदि से शरीर के व्याधित होने पर आत्मा शीघ्र व्याकुल हो जाता है और शरीर का सुन्दर स्पर्श वाणी गंध रस रूप आदि से सम्बन्ध होने पर आत्मा प्रसन्न होता है अतः शरीर से पृथक् उसकी सत्ता नहीं मानी जा सकती ॥ २ ॥ वृक्षों से जो कच्चे फल तोड़े जाते हैं वे सन्तान उत्पन्न करने में समर्थ नहीं होते परन्तु वे ही परिपक्व हो जाने पर नये फलों को उत्पन्न करने लगते हैं। उनमें यह शक्ति पृथ्वी जल वायु और सूर्य के प्रकाश से अर्थात् जड़ों से ही आती है। परिपक्व बीज भी आर्द्र धरती से संयुक्त होने और बाद में समुचित वायु प्रकाश ओर खाद आदि पाने पर ही सन्तान उत्पन्न कर पाते हैं ॥ ३ ॥ सारे जीव वायु, अन्न, जल, प्रकाश आदि पाने पर जीवित रहते हैं और उनके अभाव में मर जाते हैं अतः जड़ ही चेतन के पोषक और पिता हैं ॥४॥ छोटे बालक अपना हिताहित नहीं जानते। वे आग को पकड़

यतो हितं स्वं न विदन्ति बाला गृह्णन्ति वह्निं च पतन्ति कूपे ।
वृद्धा युवानोऽपि च सन्त्यनेके सुशिक्षिता दुर्व्यसनेषु सक्ताः ॥ ५ ॥

वन्या नराः सन्ति ततोऽपि गर्ह्यास्तेभ्यो निकृष्टाः पशुवानराद्याः ।
जीवा अतो ज्ञानवतात्मना वा न सन्ति सर्वज्ञशिवेन युक्ताः ।। ६ ।।

वदन्त्यनेके यतयोऽयमात्मा न जायते नो म्रियते कदाचित् ।
ये देहनाशे कथयन्ति नाशं सनातनस्यास्य न पण्डितास्ते ।। ७ ।।

अजायमानस्य विभोः स्थिरस्य न शोषणेऽस्यास्ति मरुत् समर्थः ।
न क्लेदनेऽम्भो दहनो न दाहे न च्छेदने शस्त्रचयोऽमरस्य ।। ८ ।।

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ।। ९ ।।

परन्त्वजीर्णेऽपि मनोहरेऽपि स्वस्थेऽपि देहे सलिले निमग्ने ।
भीतो जलात् सत्वरमेष आत्मा सदा परित्यज्य भवत्यदृश्यः ॥ १० ॥

---

लेते हैं और कुयें में गिर जाते हैं। अनेक सुशिक्षित और तरुण भी दुर्व्यसनों में आसक्त हैं ॥ ५ ॥ वनों में रहने वाले आदिवासी उनसे भी निकृष्ट हैं तथा पशुओं और वानरादिकों की स्थिति और भी निम्न है। अतः सिद्ध है कि सारे जीव ज्ञानविज्ञानसंपन्न आत्मा या परमात्मा से समन्वित नहीं हैं ॥ ६ ॥ हमारे अनेक योगीश्वरों का कथन है कि आत्मा न कभी पैदा होता है, न मरता है। वह सनातन है अतः देह की समाप्ति पर आत्मा को समाप्त समझने वाले दूरदर्शी नहीं हैं ॥ ७ ॥ यह पैदा नहीं होता, सर्वव्यापी है और स्थिर है। इसे वायु सुखा नहीं सकता, पानी गला नहीं सकता, अग्नि जला नहीं सकता और शस्त्र मार नहीं सकते ॥ ८ ॥ जैसे मनुष्य पुराने वस्त्रों को छोड़ नवीन वस्त्र धारण करते हैं वैसे ही आत्मा एक शरीर को छोड़ दूसरे में प्रविष्ट होता है ॥ ९ ॥

अच्छेद्योऽयमदाह्योमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥
वासांसि जीर्णानि यथा विहाय ( गीता ) ॥

परन्तु हम देखते हैं कि तरुण, सुन्दर और स्वस्थ मनुष्य के भी पानी में डूबने पर आत्मा थोड़ी ही देर में उसे सदा के लिये छोड़ कर अदृश्य हो जाता है ॥ १० ॥ उसका शरीर बाहर तट पर रखा है, कहीं टूटा फूटा

निष्कासिते च प्रहरेण नीराद्धूतोऽपि भूयः स्वजनै रुदद्भिः।
निजेऽपि नायं प्रविशत्यगारे व्रणादिहीने परमप्रियेऽपि ॥ ११ ॥
तथैव कायेऽग्निविषादियुक्ते सर्पेण दष्टे निहतेऽस्त्रशस्त्रैः।
वायोरभावे च जहाति तं द्राग् भूत्वाकुलो नैति पुनश्च तत्र ॥ १२ ॥
विद्यास्वनेकासु कलासु वित्ता वैज्ञानिका वीरवरा मृता ये।
नायन् स्वदेशानपि देशभक्ता मुक्तौ विरागा निरताः सुकार्ये ॥ १३ ॥
अप्यात्मवन्तः पशुपक्षिवृक्षा नश्यन्ति खाद्यांब्वनिलाद्यभावे।
आत्मा ततो नित्यमृतश्च जातश्छेद्योऽस्ति दाह्योऽस्ति तनोरभिन्नः ॥ १४ ॥
वदन्ति केचित् सरला मनुष्या असद्विचारोदयकाल एव।
मुहुर्विरोधं कुरुते नरात्मा बिभेत्यघात् सन्ततमेष साधुः ॥ १५ ॥
किन्त्वध्वरेष्वात्मरहस्यविज्ञाः पुण्येप्सवो याजकयायजूकाः।
यूपेषु संबध्य पशूननेकांश्छिन्दन्ति मन्त्रेण वपूंषि तेषाम् ॥ १६ ॥

---

नहीं है, युवती पत्नी और वृद्ध माता पिता तथा भाई आदि छाती पीट पीट कर विलाप कर रहे हैं फिर भी आत्मा अपने उस परमप्रिय शरीर में प्रविष्ट नहीं होता ॥ ११ ॥ शरीर को सांप काट ले, वह अस्त्र शस्त्र से क्षत हो, अग्नि विष आदि से युत हो, वायु न पावे तो भी आत्मा व्याकुल होकर उसे झट छोड़ कर भाग जाता है तथा उसमें फिर कभी नहीं आता ॥ १२ ॥ भिन्न भिन्न देशों के अनेक महान् वैज्ञानिक, वीर, विद्वान्, कलाकार और देशभक्त अपना देश छोड़ कर गये तो फिर नहीं लौटे। वे मुक्ति नहीं चाहते थे अपि तु जीवित अवस्था में सदा कहा करते थे कि मैं पुनः लौट कर देश सेवा और संसार की सेवा में झट लग जाना चाहता हूँ, पर नहीं आये ॥ १३ ॥ आत्मवान् पशु, पक्षी और वृक्षादि भी खाद्य, जल, वायु आदि न पाने पर मर जाते हैं, अतः आत्मा नित्य मरा करता है, छेद्य है, दाह्य है और शरीर से अभिन्न है ॥ १४ ॥ कुछ सीधे सादे लोग कहा करते हैं कि अपवित्र विचार मन में आते ही आत्मा बार बार विरोध करता है और पाप से डरता है अतः वह स्वभावतः साधु है ॥१५॥ किन्तु प्रत्यक्ष देखा जा रहा है कि कसाई ही नहीं, आत्मा का रहस्य जानने वाले पुरोहित और यजमान भी यज्ञ करते समय खंभों में अनेक पशुओं को बाँध कर मन्त्र पढ़ते हुये उनका गला काटते हैं और खाल उधेड़ते हैं ॥ १६ ॥ रानियां लम्बी लम्बी सूइयों से उनकी त्वचा छेद कर

सूचीभिरश्वत्वचि खड्गमार्गं कुर्वन्ति मन्त्रैर्नृपतेर्महिष्यः ।
मंत्रान् पठन् जुह्वति मांसमग्नौ धरासुरास्तृप्तिकृते सुराणाम् ॥ १७ ॥

कुर्वन्ति पूजामजिनोपविष्टास्तेऽश्नन्ति निन्द्यं मधुपर्कमांसम् ।
क्षत्राश्च मत्वा मृगयां स्वधर्मं निघ्नन्ति गोतुल्यमृगान् विनोदे ॥ १८ ॥

हत्वाश्वमेधे प्रथमं प्रभूतांस्तेऽश्वान् गजान् दिग्विजये मनुष्यान् ।
द्रव्यं हरन्ते प्रसभं परेषां देवेशतुष्ट्यै यशसे वृषार्थम् ॥ १९ ॥

वैश्यादयोऽपि प्रचुरैरुपायैर्धनं नृणां मांसिकजालिकाद्याः ।
प्राणान् हरन्ते करुणाविहीनाः करोति नो तत्र विरोधमात्मा ॥ २० ॥
सिद्धं ततो नास्त्यजरामरोऽसौ न संस्कृतो जन्मत एव साधुः ।
न सर्वगोऽच्छेद्यतनुः पुराणो न सर्वदानन्दमयोऽप्यजन्मा ॥ २१ ॥
उत्पद्यते ज्ञानविहीन एव हिताहितं वेत्ति निजं न मूढः ।
भवत्यथो भिन्नधियां नराणां संसर्गतो भूरिगुणो जडो वा ॥ २२ ॥

---

असिमार्ग बनाती हैं और उस समय वेदवेत्ता मन्त्र पढ़ते हैं। इसके बाद भूसुरगण देवों की तृप्ति के लिये मन्त्र पढ़ पढ़ कर अग्नि में मांस मज्जा आदि की आहुतियां देते हैं और इन सारे कृत्यों से पुण्यलाभ माना जाता है ॥ १७ ॥

विप्रगण मृगचर्म पर बैठकर पूजा ध्यान करते हैं, मधुपर्क में निन्द्य वत्सतरी मांस खाते हैं, क्षत्रिय स्वधर्म समझ कर विनोद में गाय की आकृति वाले मृगों का शिकार करते हैं ॥ १८ ॥ देवों और ईश्वर की तुष्टि के लिये और पुण्यप्राप्ति के लिये यज्ञ करते हैं, यज्ञ के पूर्व दिग्विजय में अनेक अश्वों गजों तथा मनुष्यों की हत्या करते हैं और बलपूर्वक दूसरों का धन लूटते हैं ॥ १९ ॥ वैश्य आदि भी विविध उपायों से दूसरों का धनापहरण कर लाखपति सेठ बनते हैं किन्तु इन कृत्यों में पवित्र आत्मा विरोध नहीं करती। कसाई, मलाह और बहेलिये निर्दय होकर दूसरों की जान लेते हैं। तब आत्मा नहीं बोलती ॥ २० ॥ अतः सिद्ध है कि आत्मा अजर, अमर, जन्म से ही साधु, शुभ संस्कार समन्वित, सर्वव्यापी, अच्छेद्य, सनातन, आनन्दमय और अजन्मा आदि नहीं है ॥ २१ ॥ आत्मा जन्मकाल में ज्ञानविहीन रहती है और अपना हित अहित नहीं जान पाती। जन्म के बाद भिन्न भिन्न प्रकार के लोगों के संसर्ग से गुणवान् या जड़ हो जाती है ॥ २२ ॥

निघ्नन्ति शूराः समरे नरादींश्चौराश्च रात्रौ स्वगृहेषु सुप्तान् ।
दाशा झषान् वागुरिका विहङ्गान् व्याधा मृगान् यज्ञरता अजादीन् ॥२३॥

भूत्वा पिशाचा न हि किन्तु तेऽमून् खादन्ति नैषां च सुखं हरन्ते ।
सिद्धं ततो नास्ति पिशाचयोनिश्चात्मा ध्रुवं नश्यति देहनाशे ॥ २४ ॥

वदन्ति केचित् परमाणुमूले शक्तिस्वरूपे विभुरस्त्यपूर्णः ।
यश्चेतनः सूक्ष्मतमः प्रकृत्या भिन्नाणुयोगाद् भवति स्फुटोऽसौ ॥ २५ ॥

संजायते च क्रमशो विकासाद् घासे तरौ कीटचतुष्पदादौ ।
स्थूलश्चदक्षः खगवानरादौ सम्पूर्णतामेति मनुष्यदेहे ॥ २६ ॥

जीवो यथाभूरुहबीजगो भूभावातवार्यन्यपरागयुक्तः ।
भवत्युपेतः फलरूपपुत्रैस्तेषामयोगे म्रियतेऽनपत्यः ॥ २७ ॥

---

एक देश के सैनिक दूसरे देश के सैनिकों, गजों और अश्वादिकों को मार डालते हैं। रात में डाकू मनुष्यों की हत्या कर देते हैं। इसी प्रकार मल्लाह मीनों को, बहेलिये पक्षियों को, व्याध मृगों को और याज्ञिक अनेक पशुओं को मार डालते हैं ॥ २३ ॥ किन्तु वे जीव पिशाच हो कर मारने वालों के पशु, पुत्र और सुख को नष्ट नहीं कर पाते। इससे सिद्ध होता है कि पिशाच योनि मिथ्या है और आत्मा निश्चित रूप से देह के साथ समाप्त होजाती है॥ २४ ॥

कुछ वैज्ञानिकों का कथन है कि परमाणु का मूल शक्ति स्वरूप होता है और उसमें अतिशय सूक्ष्म अपूर्ण चेतन रहता है। वह भिन्न परमाणुओं के योग से विकसित अर्थात् अधिक चेतन हो जाता है ॥ २५ ॥ वह घास, वृक्ष, कीट, पशु, पक्षी तथा वानर आदि में क्रमशः विकसित होते होते मनुष्य के शरीर में पूर्ण चेतन हो जाता है। मनुष्येतर प्राणियों के चेतन अपूर्ण हैं ॥ २६ ॥ वृक्षों के बीज में स्थित सूक्ष्म चेतन पृथ्वी, प्रकाश, वायु और जल के संयोग से धीरे-धीरे वृक्ष का रूप धारण कर लेता है और पुष्पित होने पर अन्य वृक्ष के पराग से संयुक्त होकर फल रूपी अनेक पुत्रों का पिता बन जाता है किन्तु बीज को मिट्टी जल प्रकाश वायु और अन्य वृक्ष के पराग का संयोग न प्राप्त हो तो वह निःसन्तान मर जाता है ॥ २७ ॥

तथैव नारीनरदेहसंस्था मिथो मिलित्वैव भवन्ति पूर्णाः।
जीवाः समे ते च युतेरभावे तिष्ठन्त्यपूर्णा रहिता अपत्यैः ॥ २८ ॥

अङ्गानि सर्वाण्यपि सन्ति देहे मिथो निबद्धानि सहायकानि।
पुष्टानि जीर्णानि भवन्ति साकं भवन्ति मोघानि युतेरभावे ॥ २९ ॥

सन्ति स्थिता ये बहुजीवकोशा देहेषु तेषां युतितोऽयमात्मा।
उत्पद्यते नश्यति तद्वियोगे मान्योऽस्ति नोऽस्मादजरोऽमरो वा ॥ ३० ॥

पूर्णो निरीहो भगवान्न सृष्टिं निर्माति दुःखैर्विविधैरुपेताम्।
निर्माति चेन्नो सदयो न पूर्णः स्रष्टा कुधीक्लेशगदादिकानाम् ॥ ३१ ॥

करोत्यनावृष्ट्यतिवृष्टिवात्याज्वालामुखैरुष्णमरुत्तुषारैः।
भूकम्पशीतोपलसिन्धुभंगैर्नाशं सतां दुष्कृतिनां स साकम् ॥ ३२ ॥

---

ठीक इसी प्रकार नारी और नर के शरीर में स्थित जीव एक दूसरे से मिल कर ही पूर्ण होते हैं। योग न होने पर वे पूर्णत्व और सन्तान से विहीन रहते हैं। सारांश यह कि कोई चेतन सर्वथा पूर्णतम नहीं होता ॥ २८ ॥ प्राणियों के शरीर में स्थित सारे अंग एक दूसरे से घनिष्ठ रूप में सम्बन्धित हैं और एक दूसरे के सहायक हैं। वे साथ साथ पुष्ट और जीर्ण होते हैं तथा संयोग के अभाव में व्यर्थ हो जाते हैं ॥ २९ ॥ शरीर में जो अनेक जीवकोश स्थित हैं उनके योग से चेतन आत्मा का निर्माण होता है और उनका परस्पर वियोग होने पर वह समाप्त हो जाता है अतः आत्मा अजर और अमर नहीं है ॥ ३० ॥

नास्तिकों के ये सारे सम्प्रदाय कहते हैं कि परमेश्वर को सृष्टि बनाने की इच्छा हुई। इससे सिद्ध होता है कि वे पूर्णकाम नहीं हैं। वे सर्वज्ञ और दयालु भी नहीं हैं क्योंकि उनकी सृष्टि में कोई जीव पूर्ण सुखी नहीं है। ईश्वर ने अनेक दुष्टों, क्लेशों और रोगों की रचना क्यों की ॥ ३१ ॥ ईश्वर अतिवृष्टि, सूखा, आँधी, ज्वालामुखी, लू, तुषार, भूकम्प, शीतलहरी, ओलों की वृष्टि और समुद्र की भीषण तरंगों से पापियों के साथ सज्जनों को भी नष्ट कर देते हैं ॥ ३२ ॥ वे कहीं भीषण वर्षा से और कहीं अवृष्टि से

जीवान्निमग्नान् सलिले कदाचित् क्लिष्टानवृष्टया कुरुते कदाचित् ।
विभज्य किं नो स जलं यथेच्छं सर्वत्र दत्ते करुणासमुद्रः ॥ ३३ ॥

न दृश्यते क्वापि शिवा व्यवस्था सृष्टयां शिवस्यास्य दयार्णवस्य ।
सन्त्यत्र सौम्या बहुकष्टतप्ताः पापाश्च धामार्थसुतैः प्रसन्नाः ॥ ३४ ॥

सृष्टेर्व्यवस्थापक ईश्वरश्चेन्नराः कथं सन्ति रताः कुमार्गे ।
न्यायालयानां च भटायुधानां प्रयोजनं किं सति विश्वनाथे ॥ ३५ ॥

निर्माति चेदीश्वर एव सृष्टिं प्रयोजनं किं जनकस्य मातुः ।
अस्तीश्वरः किं जनने समर्थः कस्यापि जीवस्य तयोरभावे ॥ ३६ ॥

चेदस्ति सर्वत्रग ईश एकः किं जन्तवस्तर्हि समे समा नो ।
जडाः कथं सन्ति जडा विभिन्ना ब्रुवन्ति किं नो पशुपक्षिवृक्षाः ॥ ३७ ॥

न चेतनः कोऽपि भवत्यदेहो न देहवांस्तिष्ठति चैककाले ।
देहेष्वनेकेषु बहुस्थलेषु न सर्वगोऽतो भगवान्न चात्मा ॥ ३८ ॥

---

अपने पुत्रों को क्लेश देते हैं। यदि दयासागर हैं तो अपने जल को बाँट कर सबको सुखी क्यों नहीं करते ॥३३॥ इन दयासागर शिव की सृष्टि में कहीं शुभ व्यवस्था दिखाई नहीं देती। यहाँ सज्जन अनेक कष्टों से सन्तप्त हैं और पापी धन, धाम, पुत्र आदि से सम्पन्न हैं ॥ ३४॥ यदि ईश्वर सृष्टि के व्यवस्थापक हैं तो मनुष्य पाप क्यों कर रहे हैं ? एक जीव दूसरे को खा क्यों रहा है ? उनके रहते न्यायालयों, शूरों और शस्त्रों में अपव्यय करने की आवश्यकता क्यों पड़ती है ॥ ३५ ॥ यदि ईश्वर ही सबको पैदा करते हैं तो माता पिता की क्या आवश्यकता है ? क्या माता पिता के अभाव में ईश्वर किसी जीव को पैदा कर सकते हैं ॥ ३६ ॥ यदि ईश्वर सर्व व्यापी हैं तो सब जीव और जड़ समान क्यों नहीं होते ? जड़ों में चेतन का अभाव क्यों है ? पशु, पक्षी और वृक्ष बोलते क्यों नहीं ॥ ३७ ॥ कोई भी चेतन प्राणी शरीर से विहीन नहीं होता और कोई शरीरधारी चेतन एक काल में अनेक स्थानों में बैठ नहीं सकता। इसलिये न तो भगवान् सर्वव्यापी हैं न आत्मा ॥ ३८ ॥ ईश्वर यदि संसार के रचयिता हैं तो उन्हें किसने बनाया ?

स्रष्टेश्वरश्चेज्जगतस्तदाकः ससर्ज तं किन्न जगत्स्वयंभूः।
पूर्वं कुतो जन्मत एव सृष्टेराप्नोति धाता करणानि तस्याः ॥ ३९ ॥

सिद्ध्यै न तस्यास्ति ततः प्रमाणं न चानुमानाय दृढोऽस्ति हेतुः।
नारंभकालं न च नाशकालं जानाति सृष्टेर्जनकं न कोऽपि ॥ ४० ॥

नृसिंहकूर्माण्डजसूकराणां खरेभषट्पञ्चचतुर्मुखानाम्।
खराजघूकोन्दुरवाहनानां कीशर्क्षकाकोरगससेवितानाम् ॥ ४१ ॥

विनिर्मितानां कविभिर्विनोदे दिवौकसां ब्रह्मशिवाच्युतानाम्।
न कोऽपि लाभः स्मरणार्चनाभ्यामपव्ययोस्त्यर्थबलादिकानाम् ॥ ४२ ॥

ध्यानेऽपि सुंदर्शनलालसानां दृष्टाः श्रुता यन्ति त एव भावाः।
अलौकिका नो विषया न देवा भ्रमोऽस्त्यतो दर्शनमीश्वरादेः ॥ ४३ ॥

---

यदि वे अपने से उत्पन्न हैं तो संसार भी स्वयंभू हो सकता है। सृष्टि बनाने के लिये कुछ साधनों की आवश्यकता पड़ी होगी। सृष्टि के पूर्व ईश्वर को वे करण कहाँ से मिल गये ॥ ३९ ॥ अतः ईश्वर की सिद्धि का न तो कोई प्रमाण है, न दृढ़ अनुमान है, न कोई सृष्टि के आरम्भकाल को जानता है, न विनाशकाल को, न सृष्टि के जनक को ॥ ४० ॥

( ईश्वरासिद्धेः १।९२॥ प्रमाणाभावान्न तत्सिद्धिः ५।१०॥ सम्बन्धाभावान्नानुमानम् ५।११। ।कापिलसांख्यशास्त्र ) ॥

ईश्वर के नृसिह, कच्छप, मत्स्य और सूकर, आदि अवतारों को, गधे और हाथी सरीखे तथा छ, पाँच, चार आदि उनके मुखों को, गर्दभ मेष, उलूक मूषक आदि वाहनों को और वानर भालू काक सर्प आदि सेवकों को ॥ ४१ ॥ तथा ब्रह्मा, शिव, विष्णु, इन्द्र, वरुण आदि देवों को कवियों ने विनोदमें बनाया है अतः इनके स्मरण और पूजनसे कोई लाभ नहीं अपितु धन शक्ति और समय का अपव्यय होता है ॥४२॥ दर्शन की लालसा वालों को ध्यान में इनका दर्शन भी हो जाता है क्योंकि सुने और देखे भाव ही ध्यान और स्वप्न में दिखाई देते हैं अलौकिक विषय और ईश्वर नहीं। अतः इनका दर्शन हो जाना भी एक भ्रम ही है ॥ ४३ ॥

नास्तीश्वरो नो नरको न नाकः फलं कृतेर्नास्ति न कोऽपि देवः ।
पापा भविष्यन्त्यनया प्रतीत्या नराः समेऽपीति वदन्ति केचित् ।। ४४ ।।

परञ्च भीतेर्नरकव्यथानां धातुश्च वा कर्मफलप्रदातुः ।
भवन्ति धर्मेऽभिरता मनुष्या अस्त्येष तेषा भ्रम एव नूनम् ।। ४५ ।।

यतः स्मरन्तोऽपि हरिं प्रभूता मालाजटाभस्मविभूषितांगाः ।
धर्मोपदेशे प्रथिताश्च पूज्या विश्वेशदेवात्मरहस्यविज्ञाः ।। ४६ ।।

हरन्ति शान्ति जगतः कुकृत्यैर्विहाय भीतिं नरकस्य विष्णोः ।
तस्मात् स्वभावः प्रमुखोऽस्ति नान्धा प्रकल्पितेशामरनाकभक्तिः ।। ४७ ।।

तानास्तिकाः प्रत्यवदन् प्रभूताः सन्त्यत्र भूवायुजलाग्नियोगाः ।
न दृश्यते किन्तु नृजन्म तेभ्यः स्वभावतो वा मनुजप्रयसात् ।। ४८ ।।

---

कुछ सज्जनों का कथन है कि ईश्वर, स्वर्ग, नरक, कर्मफल और देवों की सत्ता का निषेध करने पर सब लोग पापी हो जायेंगे ।। ४४ ।। किन्तु नरकों में प्राप्त होने वाली व्यथा के भय से अथवा कर्मो का फल देने वाले भगवान् के भय से सब मनुष्य धर्मशील हो जाते हैं यह उनका निश्चित रूप से एक भ्रम है ।। ४५ ।। क्योंकि ऐसे अनेक मनुष्य प्रत्यक्ष देखे जा रहे हैं जो हरिभजन करते हैं, धर्मोपदेश में प्रख्यात हैं, लोकपूज्य हैं, ईश्वर देव और आत्मा के रहस्यवेत्ता हैं, उनका शरीर माला, जटा और भस्म से विभूषित है ।।४६।। परन्तु वे नरक और विष्णु के भय का परित्याग कर अपने दुष्कर्मों द्वारा संसार की शान्ति का अपहरण कर रहे हैं अतः मनुष्य का स्वभाव प्रमुख है, काल्पनिक ईश्वर, देव, और स्वर्ग की की अन्धभक्ति नहीं ।। ४७ ।।

नास्तिकों के विरोध में आस्तिकों का कथन है कि पृथ्वी जल, अग्नि और वायु के संयोग संसार में असंख्य स्थानों में देखे जा रहे हैं किन्तु उनसे मानव की उत्पत्ति न तो अपने आप होती है न मनुष्य के प्रयास से सम्भव है ।। ४८ ।। नास्तिकों का कथन है कि जैसे जड़

लोकायताः प्राणिजनिं जडानां संयोगतो मद्यसमां विदन्ति ।
परञ्च मद्योऽस्ति जडः प्रभावः कुत्रापि नाप्राणिषु तस्य दृष्टः ॥ ४९ ॥
तिष्ठन्ति भृङ्गा मधुमक्षिका वा पुष्पे यथा भूतयुतौ तथैव ।
दृश्या अदृश्या बहुसूक्ष्मजीवा उत्पद्यते किन्तु जडान्न जीवः ॥ ५० ॥
केचिन्नरा जन्मत एव चौर्ये हिंसाजुगुप्सामदमत्सरादौ ।
भवन्ति सक्ताः पिशिते सुरायां कामे विरोधे महतां स्वभावात् ॥ ५१ ॥
केचित् प्रवृत्ताश्च भवन्ति बाढं दैवीषु सम्पत्सु परोपकारे ।
शौचार्जवत्यागशमेषु सत्ये स्वाध्यायसन्तोषतपोदमादौ ॥ ५२ ॥
मेधाविनो मन्दधियश्च केचित् केचिद्रताः शस्त्रकलासु काव्ये ।
भवन्ति पूर्वार्जितभावयोगान्नात्मा ततो जन्मनि शून्य आस्ते ॥ ५३ ॥

---

तत्त्वों के योग से चेतन मद्य पैदा होता है उसी प्रकार जडों के संयोग से चेतन जीव उत्पन्न होते हैं परन्तु सत्य यह है कि मदिरा चेतन नहीं है। उसका प्रभाव चेतन पर ही पड़ता है। वह जड़ को चेतन नहीं बना पाती है ॥ ४९ ॥ पुष्पों के उपवन में भ्रमर और मधुमक्षिकाओं का समूह घूमा करता है और पृथ्वी आदि पाँच भूतों के योग में अनेक दृश्य तथा अदृश्य सूक्ष्म जीव बसते हैं परन्तु जड़ से जीव कभी भी उत्पन्न नहीं होता ॥ ५० ॥ वान हेलमांट का मत था कि गेहूँ के चोकर को मानव के पसीने में भीगे कपड़े में रखने पर तीन सप्ताह में चूहे पैदा हो जाते हैं। भारतीयों का विश्वास था कि दही और गोबर के संयोग से दो सप्ताह में बिच्छू पैदा हो जाते हैं। मिश्र वाले कहते थे कि कीचड़ में सूर्यताप पड़ने पर मेंढक, सांप और कीड़े उत्पन्न हो जाते हैं, परन्तु इटालियन वैज्ञानिक फ्रेन सेस्को ने सन् १६५० में सिद्ध कर दिया कि जीव से ही जीव उत्पन्न होते हैं, जड़ से कभी नहीं ॥ ५० ॥ कुछ मनुष्य जन्मतः स्वभाव से ही चोरी, हिंसा, चुगली, निन्दा, मद, मत्सर, मांस, मदिरा, कामवासना और महान् पुरुषों के विरोध में आसक्त हो जाते हैं ॥५१॥ कुछ परोपकार, शौच, नम्रता, त्याग, शम, सत्य, स्वाध्याय, सन्तोष, तप, दम आदि दैवी सम्पत्तियों में अतिशय रुचि रखते हैं ॥ ५२ ॥ कुछ मेधावी और कुछ मन्दबुद्धि होते हैं, कुछ काव्य संगीत और चित्रकला में, कुछ शस्त्रकला और खेल आदि में प्रवृत्त होते हैं। ये प्रवृत्तियाँ पूर्वजन्म में अर्जित भावों के संयोग से उत्पन्न होती हैं अतः आत्मा जन्मकाल में शून्य रहती है, यह कथन मिथ्या है ॥ ५३ ॥ अन्नों और फलों के बीजों में अनेक गुण होते हैं

सा हर्षिताऽभूत् पुरतो विलोक्य गन्धर्वविद्याधरकिन्नरादीन् ।
संगीतनृत्यद्वयवाद्यविज्ञाञ्छोभानिधीन् गायत ईशवृत्तम् ॥ ८५ ॥
ततो वसुं तत्र मनोरमांगं विलोक्य मुग्धा चकिता जगाद ।
मुनीश सौन्दर्यखनिर्ध्वजिन्याः पुरः समायाति सदाशिवोऽयम् ॥ ८६ ॥
विहस्य तामाह मुनिर्विमुग्धे न शंकरः किंकर एव तस्य ।
ख्यातोऽस्ति देवो वसुसंज्ञकोऽयं सदा महादेवपदानुरागी ॥ ८७ ॥
निशम्य देवर्षिवचः सलज्जा मेना विचारप्रसिता बभूव ।
इतोऽपि यस्मिन्नधिकाऽस्ति कान्तिः स कीदृशोऽहो पुरुषो महेशः ॥ ८८ ॥
तत्रैव रूपे द्विगुणं ततः सा यक्षं मणिग्रीवमपश्यदुत्का ।
शिवोऽयमूचे च तदा हसित्वा देवर्षिराहैष शिवस्य दासः ॥ ८९ ॥
पुनश्च साऽन्यस्य गणस्य दृष्ट्वा शोभाधिकत्वं वपुषः प्रहृष्टा ।
उच्चैरवोचन्मुनिराज नूनं शिवोऽयमायाति शिवोऽयमेव ॥ ९० ॥
मुनीश्वरस्तां पुनरप्यवादीन्नायं शिवो देवि नरोऽतिकान्तः ।
प्रियः सुतादप्यधिकः स्मरारेर्भिषग्वरस्यास्त्ययमौषधीशः ॥ ९१ ॥

---

गायन, ताण्डवनृत्य, लास्यनृत्य और वादन के विशेषज्ञ उन गन्धर्वों, विद्याधरों और किन्नरादिकों को देखा जो भिन्न भिन्न रागों तालों और छन्दों में भगवान् का यशोगान कर रहे थे ॥८५॥ इसके बाद मनोरम शरीर वाले वसुदेव को देख चकित और मुग्ध होकर उच्च स्वर में बोल उठीं कि मुनिराज ! बारात के आगे आगे शोभा की खान ये सदाशिव आ रहे हैं ॥८६॥ मुनि हंस पड़े और कहने लगे कि मुग्धे । ये महादेव शिव नहीं अपि तु उनके पदानुरागी और किंकर महान् देव वसु हैं ॥८७॥ मेना लजा गईं और सोचने लगीं कि इनसे भी अधिक कान्ति वाले पुरुष शिव कैसे होंगे ॥८८॥ तब सिर ऊपर उठा कर उन्होंने वसु से द्विगुणित सौन्दर्य वाले यक्षाधीश मणिग्रीव को देखा और कहने लगीं कि महर्षे ! अब मैंने शिव को देख लिया । तब देवर्षि ने हंस कर कहा कि ये शिव के दास मणिग्रीव हैं ॥८९॥ इसके बाद एक अन्य गण के शरीर का शोभाधिक्य देखकर हर्ष में बिभोर हो मेना पुनः तारस्वर में बोल उठीं कि मुनिराज ! शिव आ गये । निश्चित है कि ये ही शिव हैं ॥९०॥ मुनि ने पुनः कहा कि देवि ! यह अति सुन्दर पुरुष शिव नहीं अपि तु चन्द्रमा नामक उनका शिष्य है । शिव को यह पुत्र से भी अधिक प्रिय है । जनता शिव को वैद्यनाथ और इसे औषधीश कहती है ॥९१॥ वेदों का कथन है कि आकाशस्थ चन्द्रमा

हृदो विराजः पुरुषस्य जातं वदन्ति वेदा गगनस्थचन्द्रम् ।
अयं सुधांशुर्हृदये च मेने शिवस्य नित्यं वसति द्विजेशः ॥ ९२ ॥
अस्माच्छिवोऽनेकगुणोऽस्ति कान्तः पूज्यः समेषां सुषमाधिकानाम् ।
वसन्ति चन्द्राग्निविभाकराणां विभाः शिवस्याक्षिविभैकदेशे ॥ ९३ ॥
निशम्य वाचं चकिता महर्षेः सालज्जिताऽथो मुदिताऽचिचिन्तत् ।
मनोरमोऽस्मादपि कोऽपि तन्वा कथं नु शक्यः पुरुषो विधातः ॥ ९४ ॥
ततो रवीन्द्राग्निजलेशवायून् कुबेरवागीशभृगून् विलोक्य ।
तथैव तेषां सुषमाऽभिभूता सर्वानवादीत् क्रमशः शिवोऽयम् ॥ ९५ ॥
मुहुर्मुनिश्चाह शिवस्य दासा एते स एभ्योऽस्त्यधिको मनोज्ञः ।
समागतस्तत्र तदैव विष्णुः पीताम्बरोऽनेकमनोजकान्तिः ॥ ९६ ॥
दृष्ट्वा घनश्यामतनुं ततः सा हर्षाधिकोवाच मुने शिवोऽयम् ।
देवर्षिराहैष शिवो न भद्रे प्रियो वयस्योऽस्ति शिवस्य विष्णुः ॥ ९७ ॥
अयं शिवस्याखिलकार्यमन्त्री कायेन भिन्नोऽपि हृदाऽस्त्यभिन्नः ।
विष्णुर्विमृश्यैव शिवेन नित्यं करोति कर्माणि शिवस्तथैव ॥ ९८ ॥

---

विराट् पुरुष के मन से उत्पन्न हुआ है और यह द्विजराज, चन्द्र शिव के हृदय में सदा वास करता है ॥९२॥ शिव इससे अनेक गुना सुन्दर हैं और सब सुन्दरतम पुरुषों के पूज्य हैं। हे देवि ! चन्द्रमा, अग्नि और सूर्य की कान्तियां शिव के नेत्र की कान्ति के एक कोने में बसती हैं ॥९३॥ महर्षि के इस क़थन को सुन मेना चकिता, लज्जिता और मुदिता होकर सोचने लगीं कि हे विधाता ! वह पुरुष कैसा होगा जिसके शरीर की कान्ति इससे अधिक होगी ॥९४॥ इसके बाद वे रवि, इन्द्र, अग्नि, वरुण, वायु, कुबेर, बृहस्पति और भृगु का सौन्दर्य देखकर बारी बारी से सबको शिव कहती रहीं ॥९५॥ और नारद ब़ार बार समझाते रहे कि ये सब शिव के दास हैं। शिव इनसे अत्यधिक सुन्दर हैं। तब तक अनेक कामदेव को कान्ति वाले पीताम्बरधारी विष्णु आ गये ॥९६॥ उनके घनश्याम शरीर को देख मेना हर्षातिरेक से बोल उठीं कि मुनिराज ! बस ये ही शिव हैं। मुनि ने कहा कि भद्रे ! ये शिव नहीं अपि तु उनके प्रिय मित्र हरि हैं ॥९७॥ ये शिव के सब कार्यों के महामन्त्री हैं और शरीर से भिन्न होने पर भी हृदय से उनसे अभिन्न हैं। हरि और हर, दोनों प्रत्येक कार्य आपस में विमर्श करने के बाद ही करते हैं ॥९८॥

विद्धि त्वमस्मादपि सुन्दरं तं मयस्करं शंकरमाशुतोषम् ।
मयोभवं शंभवमग्निबीजं श्रीकण्ठमीशं मृडभर्गसंज्ञम् ॥ ९९ ॥

शोभापतेः कोपि शिवस्य शोभां क्षमोऽस्ति नो वर्णयितुं कवीशः ।
जानन्ति केचिच्च महान्त एव कः सुन्दरः कोऽस्ति नरः कुरूपः ॥ १०० ॥

प्रायः समे चर्मदृशाऽस्थि चर्म पश्यन्ति न ज्ञानदृशा धियं हृत् ।
पश्यत्युमा ज्ञानदृशेशकान्ति पश्यन्ति केचिन्मुनयो न सर्वे ॥ १०१ ॥

नाज्ञास्त मेनाऽर्थमृषेः सदुक्तेः परन्तु गौर्याः प्रशशंस भाग्यम् ।
साऽचिन्तयत् प्राप्स्यति मेऽद्य कन्या पतिं महेशं सुषमासमुद्रम् ॥ १०२ ॥

विज्ञाय सर्वज्ञशिवोऽङ्गनानामुमाजनन्या अपि पूरुषाणाम् ।
शरीरकान्तौ महतीं कुलिप्सां गुणानुरागी कृतमान् विमर्शम् ॥ १०३ ॥

---

आप जान लें कि शंकर इनसे अधिक सुन्दर हैं । इसीलिये उन्हें अग्निरेतस्, भर्ग और श्रीकण्ठ आदि कहा जाता है । उनकी शोभा को देख कर मनुष्य तृप्त हो जाते हैं अतः उन्हें मयस्कर, शंकर, आशुतोष, मयोभव, शंभव और मृड आदि कहा जाता है ॥९९॥ मेना देवि ! संसार का कोई भी महाकवि शोभापति शिव की शोभा का वर्णन करने में समर्थ नहीं है और शोभा किसे कहते हैं, कौन सा मनुष्य सुन्दर है तथा कौन कुरूप है, इस बात को कुछ महान् पुरुष ही समझ पाते हैं ॥१००॥ सामान्यतः ऐसा होता है कि कविगण चर्मचक्षुओं से मनुष्य का केवल चमड़ा और हड्डी देखते हैं। जिनके नेत्र यहीं रुक गये वे ज्ञानदृष्टि से अन्तः सौन्दर्य अर्थात् मनुष्य की बुद्धि और मन को नहीं देख पाते । इसलिये शंकर के वास्तविक सौन्दर्य को या तो उमा देवी सूक्ष्मदृष्टि से देखती हैं अथवा कुछ मुनि देख पाते हैं। उसका दर्शन सब के वश की बात नहीं है ॥१०१॥ मेना मुनि की सदुक्ति का भावार्थ नहीं समझ सकीं किन्तु मन में गौरी के भाग्य की प्रशंसा करते हुये सोचने लगीं कि आज मेरी कन्या शोभा के सागर महेश को पति रूप में पाने जा रही है ॥१०२॥ गुणानुरागी और शरीरशोभा को महत्त्व न देने वाले सर्वज्ञ शिव स्त्रियों की, मेना की और पुरुषों की शरीरकान्ति के प्रति इस महती कुलिप्सा को जान कर सोचने लगे कि ॥१०३॥ जो मूढ़ बार बार इस बाह्य सौन्दर्य की प्रशंसा करते हुये उस

ये बाह्यसौन्दर्यमिदं प्रशंसन् मुहुर्मुहुस्तत्र भवन्ति मुग्धाः।
कथं नु तेऽन्तःसुषमां कृतीनां द्रक्ष्यन्ति मूढा विदुषामृषीणाम् ॥ १०४॥
मांसास्थिचर्मस्तुतिपाठसक्ताः सिद्धान्तमेते बहवो न जज्ञुः।
क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ॥ १०५॥
क्षणे क्षणे या भवति प्रणष्टा शरीरशोभा पुरुषस्य नार्याः।
युक्ता न तस्या इयती प्रतिष्ठा गुणांस्तिरस्कृत्य महत्त्वहेतून् ॥ १०६॥
एवन्तु शूराः सुधियो गुणाढ्यास्त्याज्या भविष्यन्ति बुधाः कुरूपाः।
मूढाः सदाचारविचारहीना मान्या भविष्यन्ति खलाः सुरूपाः ॥१०७॥
बभार सामान्यमतः स रूपं न भीषणं नो बहुकान्तिकान्तम्।
नाच्छादितं रत्नसुवर्णवस्त्रैर्न मार्ष्टिचर्चाम्बरमाल्यहीनम् ॥ १०८॥
विलोक्य तं नम्रशिरा मुनीशो बद्धांजलिः प्राह सरोमहर्षः।
बृहद्व्रताचार्य मुनीशपूज्य कन्दर्पदर्पापहरप्रताप ॥ १०९॥

---

पर मुग्ध हो रहे हैं वे गुणवानों, विद्वानों और महर्षियों की अन्तः सुषमा को कैसे देख पावेंगे ॥१०४॥ मांस, अस्थि और चमड़े के स्तुतिपाठ में आसक्त अनेक महाकवि इस सिद्धान्त को नहीं जानते कि रमणीयता का वास्तविक स्वरूप वह है, सुन्दरता वह है, जो क्षण क्षण में नवीन होती रहती है, उत्कर्ष को प्राप्त होती है ॥१०५॥ सारांश यह कि मनुष्य को महान् बनाने वाले उसके गुण हैं। वे सर्वदा बढ़ते और ऊपर उठाते रहते हैं। अतः गुणों का तिरस्कार कर पुरुष और स्त्री की उस शरीरशोभा को इतनी प्रतिष्ठा देना उचित नहीं है जो क्षण क्षण में नष्ट होती रहती है ॥१०६॥ ऐसा करनेपर तो अनेक शूर, पवित्र विचार के लोग, मेधावी, गुणवान्, विद्वान् और सन्त कुरूप होने पर निकृष्ट हो जायँगे तथा सदाचार और सद्विचार से विहीन अनेक मूर्ख और खल सुरूप होने के कारण लोक मान्य होने लगेंगे ॥१०७॥ इसलिये भगवान् ने एक ऐसा सामान्यरूप धारण किया जो न तो रत्न और सोने के बहुमूल्य आभूषणों और वस्त्रों से लदा था न मार्ष्टि (स्वच्छता, मार्जना) और चर्चा (चन्दन आदि के लेप) से विहीन था ॥१०८॥ उनके उस रूप के दर्शन से नारद का शरीर प्रसन्नता से पुलकित हो गया और वे नतमस्तक होकर हाथ जोड़कर प्रार्थना करने लगे कि व्रतों (अहिंसा, सत्य, अस्तेय, ब्रह्मचर्य, अपरिग्रह, शौच, सन्तोष, तप, स्वाध्याय और ईश्वर प्रणिधान आदि) के महान् आचार्य, मुनीश्वरों के पूज्य, कामदेव के दर्पापहरण में समर्थ ॥१०९॥ अनेककोटि ब्रह्माण्डों के

अनेककोट्यण्डमहाधिराज नमामि शंभो करुणानिधान।
जयाशुतोष प्रणतार्तिहारिन् जयेश विश्वम्भर देवदेव ॥ ११० ॥

ततोऽन्तिकस्थामवदत् स मेनां पुरः स्थितं पश्य महेशमार्ये।
स्वकल्पनाभिन्नमवेक्ष्य सा तं बभूव शंकाकुलिता सखेदा ॥ १११ ॥

अचिन्तयन्नास्त्यधरे न नेत्रे नाकर्षणं वक्षसि किञ्चिदस्य।
न नासिकायां भुजयोर्न केशे न कन्धरे नैव गले कपोले ॥ ११२ ॥

न दृश्यतेऽस्मिन् वसुदेवकान्तिर्न नारदोक्ता शशिनो न विष्णोः।
विवाहकालेऽपि न चञ्चलत्वं स्मितं न हास्यं वदने प्रसादः ॥ ११३ ॥

रुष्टा ततः प्राह विचार्य किञ्चिद् धिगस्तु हे नारद ते कुबुद्धिम्।
अरुन्धती कुत्रगताऽतिधूर्ता सप्तर्षयः कुत्र गताश्च जाल्माः ॥ ११४ ॥

जानन्ति नो रूपमहत्त्वमेते कन्थाम्बराः पर्णगृहा दरिद्राः।
सन्त्रोटयिष्यामि रदानमीषां श्मश्रूण्यहं नर्तकचारणानाम् ॥ ११५ ॥

---

स्वामी करुणानिधान शंभो ! आप को नमस्कार है, शरणागतों के संकट को दूर करने वाले आशुतोष ! देवदेव विश्वम्भर ! आप की जय हो ॥११०॥

इसके बाद उन्होंने पास में खड़ी मेना से कहा कि देवि ! महेश्वर सामने आ गये हैं, उनका दर्शन करें परन्तु मेना अपनी कल्पना से भिन्न उनके रूप को देख कर खिन्न और शंकाकुलित हो गईं ॥१११॥ वे सोचने लगीं कि न तो इनके अधर, नेत्र और वक्षस्थल में कोई आकर्षण है न नासिका, बाहु, केश, कन्धों, गले और कपोल आदि में ॥११२॥ इनमें नारद द्वारा कथित न तो वसु देव का सौन्दर्य है न चन्द्रमा या विष्णु का, जब कि वे शंकर को इन सबों से सुन्दर बता रहे थे। विवाह कालीन वर के सामान्य गुणों का भी इनमें सर्वथा अभाव है। न तो इनके मुख पर प्रसन्नता है, न चंचलता है, न मुस्कराहट है, न हास्य है ॥११३॥ तब रुष्ट मेना कुछ सोचने के बाद बोलीं कि हे नारद ! तुम्हारी बुद्धि को धिक्कार है। कहाँ गई वह अति धूर्ता अरुन्धती और कहाँ हैं वे कपटी सप्तर्षि ॥११४॥ गुदड़ी पहनने वाले और फूस की झोपड़ी में दिन काटने वाले ये दरिद्र क्या जानें रूप का महत्त्व। अब मैं नर्तक शंकर के भांट इन सप्तर्षियों के दाँत तुड़वा दूँगी और दाढ़ी मूँछ नुचवा दूँगी ॥११५॥

तां सान्त्वयामास रहस्युमा नो मातर्मुनेर्वाक्षु कुरुष्व शंकाम् ।
मा पश्य योगीश्वरकायशोभां जानाम्यहं सम्यगिमं सुरेज्यम् ॥ ११६ ॥
सौभाग्यसौन्दर्यसुखाभिवृद्ध्यै मनोरमाङ्गा दधते प्रयासात् ।
देव्यः सुराः पादरजोऽस्य मूर्ध्ना परन्तु सा प्राह पुनः सकोपा ॥ ११७ ॥
कदापि नो रूपगुणालयां त्वां दास्यामि हीनाय धनेन कान्त्या ।
नास्मिन् गुणः कोऽपि यतो मनुष्ये यत्राकृतिस्तत्र गुणा वसन्ति ॥ ११८ ॥
प्रभावतः शंकरपादभक्तेर्मुनिः स शान्तः स्थितधीरुदारः ।
समाननिन्दास्तुतिरात्मतुष्टो मेनाऽतिवादैरभवन्नखिन्नः ॥ ११९ ॥

---

किं करोमि क्व गच्छामि को मे दुःख व्यपोहताम् ।
क्व गता ऋषयः सप्त श्मश्रूणि त्रोटयाम्यहम् ॥
सप्तर्षयः स्वयं नैव दर्शयन्तु मुखं मम ।
वन्ध्याऽहं न कथं जाता गर्भो न गलितः कथम् ॥
किं कृतं हे सुते दुष्टे काचो वै दुष्टया स्वयम् ।
हेम दत्त्वा त्वयाऽऽनीतो हंसं हित्वा च वायसः ॥
धिक् त्वां च तव बुद्धिं च धिग्रूपं चरितं तव ॥ (शिवपुराण)

पार्वती ने एकान्त में समझाया कि हे माता ! मुनिराज के कथन में शंका मत करो, वे देव हैं और योगीश्वर शंकर की शोभा मत देखो। मैं भली भाँति जानती हूँ कि वे देवों के पूज्य हैं ॥११६॥ सौभाग्य, सौन्दर्य और सुख की वृद्धि के लिये अतिशय सुन्दर अनेक देवियाँ और देव प्रयत्न पूर्वक उनके चरण की धूलि को अपने सिर पर धारण करते हैं। पार्वती के कथन का मेना पर कोई प्रभाव नहीं पड़ा और वे क्रोध में पुनः कहने लगीं कि ॥११७॥ मैं रूप और गुण की खान तुम्हें धन और कान्ति से हीन इस शिव को कभी नहीं दूँगी। ध्यान रखो, इसके पास रूप नहीं है तो गुण भी नहीं होंगे क्योंकि सामुद्रिक शास्त्र का कथन है कि जहाँ सुन्दर रूप है वहाँ सुन्दर गुण हैं ॥११८॥

हे मातर्विपरीता हि बुद्धिर्जाता तवाधुना ।
चेन्न दास्यसि तस्मै मां न वृणेऽन्यमहं वरम् ॥
विष्णुमान्यो ब्रह्ममान्यो देवदेवो मया वृतः (शिवपुराण)

भगवान् शंकर के चरणों की भक्ति के प्रभाव से नारद मुनि शान्त, स्थिरबुद्धि, उदार, निन्दा स्तुति में समभाव और आत्मतुष्ट हो गये थे अतः वे मेना के प्रलाप से खिन्न नहीं हुये ॥११९॥ अपि तु हाथ जोड़कर कहने

तां प्रांजलिः प्राह कदापि खेदं कल्याणि कुर्या न महेशरूपे।
मयोभवोऽप्येष मृडोऽपि रुद्रस्त्रिलोकपोऽप्यस्ति गुहानिवासः ॥ १२० ॥

रवौ प्रभाधाम्नि विधौ सुधांशौ यत्पावके चास्ति महत्सु तेजः।
यद्वायुभूव्योमजलेषु सत्त्वं सर्वं शिवस्यैव तदष्टमूर्तेः ॥ १२१ ॥

अतो रवीन्द्वाग्निपुरन्दराद्या यं श्रेयसे देववराः स्तुवन्ति।
तस्मै सुतां त्यागधनाय शीघ्रं समर्प्य भर्गाय लभस्व शान्तिम् ॥ १२२ ॥

प्रबोधिता सा मुनिना च गौर्या शोभारहस्यं न यदा विवेद।
संप्रार्थयामास मुनिस्तदेशं प्रदर्शयेशान मनोज्ञरूपम् ॥ १२३ ॥

सौन्दर्यबोधाय कुरुष्व किंवा मतिष्वमूषां सवितः प्रकाशम्।
एता विजानन्तु यथा नृनार्योः क्वास्ते जनेः सार्थकता च शोभा ॥ १२४ ॥

---

लगे कि हे कल्याणि ! महेश के रूप से खिन्न मत हो। वे मयोभव और मृड होने पर भी रुद्र हैं तथा त्रिलोकनाथ होने पर भी गुफा में रहते हैं ॥१२०॥ प्रभा के धाम सूर्य में, सुधांशु चन्द्रमा में, अग्नि में, महान् पुरुषों में तथा वायु पृथ्वी आकाश और जल में जो सत्त्व एवं तेज दिखाई देता है वह सब इन्हीं अष्टमूर्ति शिव का है ॥१२१॥ इसलिये सूर्य, चन्द्र, अग्नि और इन्द्र आदि महान् देव कल्याण के लिये जिन त्यागधन भर्गदेव की स्तुति किया करते हैं उन्हें अपनी कन्या शीघ्र समर्पित कर शान्तिलाभ करो ॥१२२॥

यथार्थं सुन्दरं रूपं न ज्ञातं ते शिवस्य वै।
लीलयेदं धृतं रूपं तस्मात् क्रोधं परित्यज ॥
कार्यं कुरु हठं त्यक्त्वा शिवां देहि शिवाय च ॥ (शिवपुराण)

नारद और उमा के समझाने पर भी मेना जब शोभा का रहस्य न जान सकीं तो मुनि ने प्रार्थना आरम्भ की कि हे ईशान ! अब कृपया अपना सुन्दर रूप दिखा दें ॥१२३॥ अथवा हे सवितृ देव ! सौन्दर्य के बोध के लिये इनकी बुद्धि को प्रकाशित कर दें ताकि ये जान जाँय कि पुरुष और स्त्री की शोभा क्या है और इनके जन्म की सार्थकता कहाँ है ॥१२४॥ हे नाथ ! हम इन अनपढ़ नारियों को दोष कैसे दें। हमारे देश

आत्मानमीशस्य हरेश्च भक्तानुद्घोषयन्तो बहवः कवीशाः ।
शृंगारहावांश्च विलासलीलाः काव्ये तयोर्विस्तरतो लिखन्ति ॥ १२५ ॥

जायां विहायेश्वरभक्तिलीना भक्ताश्च संन्यासिन ईशरूपाः ।
मुहुर्मुहुर्मांसवसाविकारौ नारीकुचावादरतः स्मरन्ति ॥ १२६ ॥

वृत्तौ घनौ तौ दृढतुंगपीनौ समौ च शाक्ताः प्रपिबन्ति मातुः ।
इमास्ततो नाथ शरीरकान्तौ रता अबोधाः प्रमदाः क्षमस्व ॥ १२७ ॥

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥ १२८ ॥

---

की स्थिति यह है कि यहाँ के अनेक महाकवि अपने को शिव और विष्णु का भक्त उद्घोषित करते हुये भी काव्यों में उनके शृंगार हावों और विलास लीलाओं का विस्तार से वर्णन करते हैं ॥१२५॥ गृह और पत्नी का परित्याग कर कुछ लोग भक्ति में लीन हो गये हैं और कुछ संन्यासी होकर अपने को ईश्वर कहते हैं पर वे दोनों मांस, मज्जा के लुथड़े नारी के स्तनों का बड़े आदर से बार बार स्मरण करते हैं ॥१२६॥ और कुछ शाक्त माता के वृत्ताकार, सटे हुये, कठोर, ऊँचे, बड़े बड़े और समान स्तनों को पीने के लिये छटपटा रहे हैं। अतः हे प्रभो ! शरीरकान्ति में रत इन अबोध प्रमदाओं को क्षमा करें ॥१२७॥

नग्नां चकार संभोगं चुम्बनं चापि कामुकः ।
स्तनश्रोणियुगं तस्या विक्षतं च चकार ह ॥
भगवान्नखरैस्तीक्ष्णैर्दशनैरधरं वरम् ।
निशावसानसमये वीर्याधानं चकार ह ॥
दत्तं चर्विततताम्बूलं राधायै प्रभुणा मुदा ।
चखाद भक्त्या सा तूर्णं प्रहस्य मदनातुरा ॥
राधाचर्विततताम्बूलं ययाचे माधवो मुदा ।
संभोगाष्टप्रकारं च विपरीतादिकं विभुः ॥
कामशास्त्रे च यद्गोप्यं चुम्बनाष्टविधं परम् ।
कामिनीनां मनोहारि चकार रसिकेश्वरः ॥
अंगैरंगानि प्रत्यंगैः प्रत्यंगानि स्मरातुरः ।
रतियुद्धविरामश्च न बभूव द्वयोरपि ॥ ब्रह्मवैवर्तपुराण

अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि शर्वः।*
पितासि लोकस्य चराचरस्य त्वमस्य पूजश्च गुरुर्गरीयान् ।। १२९ ।।

---

नाभिदेशनिहितः सकम्पया शंकरस्य रुरुधे तया करः।
तद्दुकूलमथ चाभवत् स्वयं दूरमुच्छ्वसितनीविबन्धनम् ।। कालिदास
अंके नीत्वा जनकतनयां द्वारकोटेस्तलान्ताद्....
मदनसदनमासीच्चुम्बितं.......।। (हनुमन्नाटक)।।
तालफलादपि गुरुमतिसरसं किमु विफली कुरुषे कुचकलशम् ।।
पूर्वं यत्र समं त्वया रतिपतेरासादिताः सिद्धयः।
तस्मिन्नेव निकुंजमन्मथमहातीर्थे पुनर्माधवः।
ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमन्त्रावलिं
भूयस्त्वत्कुचकुम्भनिर्भरपरीरंभामृतं वांछति ।। (गीतगोविन्द) ।।
अजानती कापि विलोचनोत्सुका समीरधूतार्धमपिस्तनांशुकम् ।
कुचेन तस्मै चलतेऽकरोत् पुनः पुरांगनामंगलकुंभसंभृतिम् ।।
इति द्विकृत्वः शुचिमिष्टभोजिनां दिनानि तेषां कतिचिन्मुदा ययुः।
द्विरष्टसंवत्सरवारसुन्दरीपरीष्टिभिस्तुष्टिमुपेयुषां निशि ।।
( संन्यासी का नैषध चरित )
गन्धर्वामरसिद्धकिन्नरवधूत्तुंगस्तनास्फालितं
स्नानाय प्रतिवासरं भवतु मे गांगं जलं निर्मलम् ।।
(वाल्मीकि का गंगास्तोत्र)
नगाधिराजकन्यकाकुचाग्रचित्रपत्रकप्रकल्पनैकशिल्पिनि त्रिलोचने रतिर्मम
(शिवताण्डवस्तोत्र) ।।
गंभीरनाभिस्त्रिवली विभूषिततनूदरी। सुकर्कशघनोत्तुंगवृत्तपीनघनस्तनी ।।
भक्तान् संपाययेद्देवी तावतोवमनोहरौ ।। दुर्गासप्तशती-मूर्तिरहस्य
बहुरि वदनविधु आंचल ढांकी पियतन चितइ भौंह करि बाँकी ।।
खंजन मंजु तिरीछे नैननि निजपति कहेउ सीय तिन सैननि ।।
मानहु मदनदुन्दुभी दीन्हीं मनसा विश्वविजय चह कीन्हीं ।।तुलसीदास

हे नाथ ! आप आदि देव हैं, पुराणपुरुष हैं, अनन्तरूप हैं, वेत्ता और वेद्य दोनों हैं। विश्वबीज, विश्व के विस्तारक और सबके एकमात्र आश्रय हैं ।।१२८।। आपकी शक्ति और पराक्रम अनन्त हैं। आप उत्पादक और संहारक दोनों हैं, शर्व हैं, चरों और अचरों सहित सारे लोक के पिता हैं तथा गुरुओं के गुरु और पूज्य हैं ।।१२९।। अतः हे ईश ! आप को साष्टांग

तस्मात् प्रणम्य प्रणिधायकायं प्रसादये त्वामहमीशमीड्यम् ।
आश्वासयैनां कृपया विभीतां भूत्वा द्रुतं कान्तवपुर्दयालो ।। १३० ।।

स्तुतिं मुनीशस्य निशम्य हृद्यां विचिन्त्य वैचित्र्यमथो रुचीनाम् ।
भक्तप्रियः कान्ततमः शिवोऽभूत् पौरास्तमालोक्य भृशं ननन्दुः ।। १३१ ।।

उच्चैरवोचंश्च जयार्तबन्धो जय प्रभो भर्ग जयादिदेव ।
जयच्छविश्रेष्ठ जय क्षमाब्धे शंभो जयेशान जयान्धकारे ।। १३२ ।।

तं पाटलं षट्पदकृष्णकेशं सर्वाङ्गशोभाढ्यदिनेशदीप्तिम् ।
सद्वर्तिमाल्यैः परिशोभितांगं पद्मास्यनेत्रांघ्रिकरं प्रसन्नम् ।। १३३ ।।

कुन्देन्दुशंखाभवृषेण साकं विलोक्य लावण्यपयोधिमीशम् ।
क्षणं स्थिराऽभूत् प्रतिमेव मेना पपौ मुदा लुब्धदृशा च शोभाम् ।। १३४ ।।

---

प्रणाम करता हूँ और प्रार्थना कर रहा हूँ कि शीघ्र कान्तशरीर होकर कृपया अतिशय भीत मेना देवी को आश्वस्त करें ।।१३०।। मुनिराज की मनोहारिणी स्तुति सुन कर भगवान् द्रवित हो गये और सोचने लगे कि सचमुच पत्नी का परित्याग करने वाले साधु, संन्यासी, विरागी तथा उच्च कोटि के विद्वान् और भक्त भी बाह्य सौन्दर्य के अन्धभक्त हो गये हैं तो इन अबोध महिलाओं को दोष कैसे दें। लोगों की रुचियाँ ही विचित्र और भिन्न भिन्न हैं अतः भक्तों की वेदना पर दृष्टिपात करते हुये उन्होंने अति सुन्दर रूप धारण कर लिया जिसे देख पुरवासी अतिशय आनन्दित हुये ।।१३१।। और उच्चस्वर में बोल उठे कि शरणागतवत्सल, दीनबन्धु प्रभु भर्ग की जय हो, आदिदेव की जय हो, शोभानिधान की जय हो, क्षमासागर शंभु की जय हो, अन्धकारि ईशान की जय हो ।।१३२।। भगवान् के पाटल (रक्तगौर) वर्ण को, भँवरों से काले केशों को, अंग प्रत्यंग की अनुपम शोभा को, भास्कर सी कान्ति को, कपूर अगर कस्तूरी कंकोल चन्दन आदि (यक्षकर्दम) के लेप एवं सुन्दर मालाओं से सुशोभित अंगों को, खिले हुये कमल की भाँति सुन्दर मुख को, कमलवत् नेत्र हाथ और पैर को तथा प्रसन्नता को ।।१३३।। देख कर मेना बहुत प्रसन्न हुईं। कुन्दपुष्प, पूर्णचन्द्र और शंख के समान श्वेतवर्ण वृष के साथ शोभा के सागर शिव को सामने देखकर थोड़ी देर तक वे मूर्ति की भाँति स्थिर हो गईं और मुग्ध दृष्टि से उनकी शोभा को पीने लगीं ।।१३४।। इसके बाद

ततो नितान्तं त्रपिता प्रतप्ता प्रणम्य पादौ शिरसा महर्षेः।
अश्रुव्याकुलाक्षी सभया जगाद क्षमस्व योगीश ममापराधम् ॥ १३५ ॥

ज्ञातं मया नो भवतश्च गौर्या नारुन्धतीसप्तमहामुनीनाम्।
वरस्य नेच्छावपुषो महत्त्वं भवादृशैः पूज्यपदस्य शंभोः ॥ १३६ ॥

ज्ञातं महात्मन्नधुना ममेयं कन्याऽस्ति धन्या सुकृतेन यस्याः।
युष्मत्प्रसादाच्च शिवो गृहं मे समागतो योगिवरैरगम्यः ॥ १३७ ॥

धन्या पुरी मेऽद्य शिवानुगानां शिवस्य पत्पद्मरजोऽभिषिक्ता।
प्रजाश्च धन्या अभवन्नशेषा धन्याऽस्म्यहं धन्यतमोऽस्ति राजा ॥ १३८ ॥

धन्याः समेऽमी पशुपक्षिवृक्षाः पश्यन्ति ये रूपमिदं भवारेः।
जन्म ध्रुवं सार्थकमद्य जातं नेत्राणि तेषां सफलान्यभूवन् ॥ १३९ ॥

नार्यश्च वृद्धा अवदन् मनोज्ञो नास्माभिरद्यावधि शंभुतुल्यः।
दृष्टः श्रुतः कोऽपि वरो मुनीज्यो जाता वयं दर्शनतोऽस्य धन्याः ॥ १४० ॥

---

अत्यन्त लज्जित और सन्तप्त होकर मुनिराज के पैरों पर गिर पड़ीं। उनके नेत्र अश्रु से आकुल थे। वे भयभीत स्वर में कहने लगीं कि हे योगीश! मेरे अपराध को क्षमा करें ॥१३५॥ मैं आप के, उमा के, अरुन्धती के, सप्तर्षियों के तथा आप लोगों के पूज्य एवं इच्छानुसार विविध शरीर धारण करने वाले वर शम्भु के महत्त्व को न जान सकी ॥१३६॥ हे महात्मा! मैंने अब जान लिया कि मेरी कन्या उमा धन्य है जिसके पुण्यबल से तथा आप लोगों की कृपा से वे शिव मेरे घर आ गये जिनका दर्शन बड़े-बड़े योगियों के लिए भी दुर्लभ है ॥१३७॥

शिव और शिवकिंकरों के चरणकमलरज से अभिषिक्त होने के कारण आज मेरी पुरी, मैं, राजा और प्रजा, सब धन्य हो गये हैं ॥१३८॥ संसार सागर से पार उतारने वाले शिव के दर्शक ये सारे पशु, पक्षी और वृक्ष धन्य हैं। आज इनके नेत्र सफल हो गये हैं और जन्म सार्थक हो गया है ॥१३९॥ पुरी की वृद्ध नारियाँ कहने लगीं कि शम्भु सदृश सुन्दर वर हमने आज तक न देखा है, न सुना है और आश्चर्य है कि शोभा के साथ साथ ये मुनियों के पूज्य भी हैं ॥१४०॥

मांगल्यसंगीतरताभिराभिः पतिव्रताभिश्च युता चकार।
नीराजनं तत्र शिवस्य मेना विलोकयन्ती वदनं सतृष्णा ॥ १४१ ॥

ततः शिवो भूपगृहं प्रविष्टः सप्तर्षिदेवस्वगणैरुपेतः।
विलोक्य तेषां सुषमां स्वभावं श्रुत्वा गिरः पौरमनांस्यनृत्यन् ॥ १४२ ॥

आतिथ्यनिष्णातगिरीशमित्रैः संभावितास्तत्र समे यथार्हम्।
सुष्ठ्वासनैः सद्वचनैः सुनीरैर्माल्यैः सुगन्धैर्मधुरैः फलाद्यैः ॥ १४३ ॥

महेश्वरो मण्डपदिश्यगच्छत् कैश्चिद्विशिष्टैः पुरुषैरुपेतः।
शृंगारगीतानि सहासगालीः स्त्रीणां बहिस्तत्र सुरा अश्रृण्वन् ॥ १४४ ॥

---

स्वरूपमुत्तमं दिव्यं शंभुना धृतमद्भुतम्।
सुप्रसन्नं सुहासं च सर्वावयवसुन्दरम् ॥
मया कृता पुरा या वै शिवनिन्दा दुरत्यया।
तां क्षमस्व शिवस्वामिन् सुप्रसन्नो भवाधुना ॥ (शिवपुराण)

मेना ने उमा की सखियों तथा इन पतिव्रता नारियों के साथ अतृप्त नेत्रों से शिव की शोभा का पान करते हुये उनकी आरती उतारी ॥१४१॥

इसके बाद सप्तर्षियों, देवों और अपने गणादिकों के साथ शिव ने भूप गृह में प्रवेश किया। उन सबों के सौन्दर्य और स्वभाव को देख कर तथा मधुर वचनों को सुन कर पुरवासियों के मन प्रसन्नता से नाच रहे थे ॥१४२॥ अतिथिसत्कार में निष्णात राजा के मित्रों ने सुन्दर आसनों, मीठे वचनों, सुन्दर जल और मालाओं एवं सुगन्धित मीठे फलादिकों से उनका समुचित सत्कार किया ॥१४३॥ तत्पश्चात् शिव ने कुछ विशिष्ट पुरुषों के साथ मण्डप की ओर प्रस्थान किया और बाहर देवगण पुरांगनाओं के शृंगारगीत तथा हासयुत मीठी गालियाँ सुनने लगे ॥१४४॥

इति हिन्दीव्याख्यायुत उमोद्वाहमहाकाव्ये त्रयोदशः सर्गः।

## चतुर्दशः सर्गः

एकाऽऽह तान् वेदपुराणवेत्री श्रृंगारहास्याभिनयप्रवीणा ।
वयोऽधिकत्वान् महिलाऽल्पलज्जा मनोविनोदे कविभिर्नियुक्ता ॥ १ ॥

हे देवताः सन्ति पुरे ऽस्मदीये बिडालभल्लूकमुखा विमूढाः ।
वृद्धा युवानो बहवः स्मरामस्तेभ्योऽतिभीता वयमाननं वः ॥ २ ॥

नोत्पद्यते श्मश्रु कदापि येषामास्येषु तेषां वनितामुखानाम् ।
कुर्मोऽद्य हृष्टाः समशीलयूनां सुस्वागतं वो भगभूषितानाम् ॥ ३ ॥

भगैरनेकै रुचितोऽस्ति शक्रः कृपीटयोनिश्च सरोजयोनिः ।
शिवाच्युताद्या भगवन्त उक्ताः साक्षाद् भगोऽप्यस्ति नमः समेभ्यः ॥ ४ ॥

---

हिमाचलनरेश के कवियों ने बरातियों के मनोविनोद के लिये एक ऐसी महिला नियुक्त की थी जो वेदपुराणवेत्री, श्रृंगार, हास्यरस और अभिनय में प्रवीण तथा अधिक वय की होने के कारण अल्पलज्जावती थी ॥१॥ वह देवों से कहने लगी कि हे देवताओ ! हमारे पुर में बहुत से विमूढ़ वृद्धों और युवकों ने लम्बी लम्बी दाढ़ी मूछें रख कर अपने मुख बिड़ाल और भालू सरीखे बना रखे हैं। हम उनसे भयभीत होकर बार बार आप के सुन्दर मुखों का स्मरण करती हैं (यहाँ देवों के लिये प्रयुक्त देवता शब्द स्त्रीलिंगी है) ॥२॥ आप युवकों के मुखारविन्दों पर दाढ़ी मूछें कभी उगती नहीं अतः सदा नारियों सदृश सुन्दर दिखाई देते हैं और हम नारियों के समशील प्रतीत होते हैं। इससे हमें बड़ी प्रसन्नता होती है और उससे बढ़ कर आनन्द का विषय यह है कि आप भगवान् कहे जाते हैं अर्थात् भग से विभूषित हैं अतः हम आप का स्वागत कर रही हैं ॥३॥ आपके देवराज इन्द्र सहस्र भगों से भूषित हैं। कृपीटयोनि अग्नि, पद्मयोनि ब्रह्मा और विश्वयोनि शिव तथा विष्णु आदि को भी अनेक भग हैं। इनके अतिरिक्त आप के यहाँ एक ऐसे देव हैं जिनका नाम ही भग है तथा आप लोगों के भक्त भगवद्भजन करते हैं। इस बात को जान कर हमें बड़ी प्रसन्नता है। हम आप को श्रद्धापूर्वक नमस्कार कर रही हैं ॥४॥

हे निर्जरा अत्र मनुष्यलोके केचित् स्मरान्धास्तरुणाश्च वृद्धाः ।
मथ्नन्ति चेतांसि नवांगनानां मन्त्रानिमान् सिद्धिकृते जपन्ति ॥ ५ ॥

वायुर्यथा भ्रामयति प्रचण्डः शुष्कं तृणं सा रमणी तथैव ।
अमोघबाणैर्मदनस्य विद्धा भ्रमत्वजस्रं मम सन्निकृष्टे ॥ ६ ॥

आह्वानबाणो मम देव तस्या विध्येन्मनः सुस्वरवत् खगानाम् ।
सा सुन्दरी वेधितमानसा मामायातु भूत्वा पतिलालसाऽरम् ॥ ७ ॥

भीमेषुभिः पञ्चशरस्य विद्धा नो कामुकी स्वे शयने शयीत ।
सा विह्वला शुष्कमुखी प्रमोदं लभेत मित्रावरुणौ वशे मे ॥ ८ ॥

ज्ञानेन शून्या जननीं च तातं विस्मृत्य सत्कर्मकुकर्मभेदम् ।
उपेत्य मामश्वसमीरवेगात् करोतु पद्मेन्दुमुखी कृतार्थम् ॥ ९ ॥

---

कभी भी वृद्ध न होने वाले देवो ! यहाँ मनुष्य लोक में युवक ही नहीं, कुछ वृद्ध भी कामान्ध होकर हम युवतियों की इच्छा के विपरीत हमारे चित्त का मथन करते हैं और अपने इष्ट की सिद्धि के लिये इन मन्त्रों को जपते हैं ॥५॥ जैसे शुष्क तृण को प्रचण्ड वायु मनमाने ढंग से उड़ाता है उसी प्रकार वह रमणी कामदेव के अमोघ बाणों से विद्ध होकर दिन रात मेरे पास घूमती रहे और कभी दूर न जाय ॥६॥ हे अश्विदेव! मेरा आह्वानबाण पक्षियों के आकर्षक स्वर की भाँति उसके मन को बेधे और वह सुन्दरी विद्धहृदया एवं पतिकामिनी हो कर झट मेरे पास आ जाय ॥७॥ हे मित्रावरुणदेव ! वह कामिनो काम के भीषण बाणों से आहत होकर विह्वला और शुष्कमुखी हो जाय। अपने पलंग पर कभी शान्ति से सो न सके और मेरे वश में ही सुख का अनुभव करे ॥८॥

यथेदं भूम्या अधितृणं वातो मथायति। एवा मथ्नामि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः॥ यत् सुपर्णा विवक्षवो अनमीवा विवक्षवः। तत्र मे गच्छताद्धवं शल्य इव कुल्मलं यथा॥ कन्यानां विश्वरूपाणां मनो गृभायौषधे। एयमगन् पतिकामा जनिकामोऽहमागमम् । अश्वः कनिक्रदद्यथा""॥ (अथर्व २।३०)। उत्तुदस्त्वोत् तुदतु मा धृथाः शयने स्वे। इषुः कामस्य या भीमा तया विध्यामि त्वा हृदि। या प्लीहानं शोषयति कामस्येषुः सुसंनता। तया विध्यामि त्वा हृदि। शुचा विद्धा व्योषया शुष्कास्याभिसर्प मा॥ (अथर्ववेद ३।२५)

यथा सपुष्पा परिरभ्य वृक्षं लताऽभितस्तं कुरुते प्रसन्नम्।
तथैव सा पीनपयोधरा मां प्रत्यंगमालिंग्य करोतु तुष्टम् ॥ १० ॥

बाणेन विद्धः प्रपतन् पृथिव्यां यथा सुपर्णो धुनुते स्वपक्षौ।
मया तथा मन्त्रशरेण विद्धं भवेन्मनः खंजनलोचनायाः ॥ ११ ॥

यथा पृथिव्याः परितो दिनेशो भ्रमत्यजस्रं विवशस्तथैव।
प्रदक्षिणं सा प्रमदा प्रकुर्यात् प्रतिक्षणं मे सुदती सुकेशा ॥ १२ ॥

पिकस्वराया अधरोरुकेशैर्नाभ्या कटाक्षैर्विकृतं मनो मे।
कुर्वन्तु गावो मुदितं हसन्तीं सम्प्रेष्य तामत्र सुहावरम्याम् ॥ १३ ॥

---

खिले कमल और चन्द्रमा के समान मुख वाली वह कामिनी ज्ञानशून्य होकर अपने माता पिता को और सत्कर्म कुकर्म के भेद को भूल जाय तथा अश्व और वायु के वेग से यहाँ आकर मुझे कृतार्थ करे ॥९॥ जैसे पुष्पों से लदी लता वृक्ष को चारो ओर से आच्छादित कर उसे प्रसन्न रखती है उसी प्रकार वह पीन कुचों वाली तरुणी प्रत्येक अंग का आलिंगन कर मुझे सन्तुष्ट करे ॥१०॥ बाण से विद्ध पक्षी जैसे धरती पर गिरकर अपने पंखों को धुनता है उसी प्रकार उस खंजन लोचना का हृदय मेरे मन्त्रबाण से विद्ध होकर तड़पे ॥११॥ जैसे सूर्य विवश होकर दिन रात धरती की प्रदक्षिणा किया करता है उसी प्रकार वह सुन्दर दांतों और केशों वाली प्रमदा प्रतिक्षण मेरे पास चक्कर काटती रहे ॥ १२ ॥

मृदुर्निमन्युः केवली प्रियवादिन्यनुव्रता। आजामि त्वा जन्या परिमातुरथो पितुः। यथा मम क्रतावसो मम चित्तमुपायसि ॥ व्यस्यै मित्रावरुणौ हृदश्चित्ता न्यस्यतम्। अथैनामक्रतुं कृत्वा ममैव कृणुतं वशे ॥(३।२५)

यथा वृक्षं लिबुजा समन्तं परिषस्वजे। एवा परिष्वजस्व मां यथा मां कामिन्यसो मन्नापगा असः ॥ यथा सुपर्णः प्रपतन् पक्षौ निहन्ति भूम्याम्। एवा निहन्मि ते मनो यथा मां कामिन्यसो ॥ यथेमे द्यावापृथिवी सद्यः पर्येति सूर्यः। एवा पर्येमि ते मनो यथा मां कामिन्यसो (अथर्ववेद ६।८) ॥

हे गौ माता ! उस बिल्वस्तनी के पिकस्वर से, अधर से, जांघ से केश से, नाभि से और कटाक्ष से मेरा मन विकृत हो गया है अतः अपने हावभावों से अतिशय रमणीया, हंसती हुई उस रमणी को यहाँ पहुँचा कर कृपया मुझे सुखी कर दें ॥१३॥ स्तनभार के कारण किंचित् झुक कर

वक्षोजनम्रा मम वक्ष इच्छेत् पादौ दृशौ शोणपदा मृगाक्षी ।
कटिं तनुं क्षीणकटिश्च तन्वी कृशोदरी वाञ्छतु बाहुपाशम् ॥ १४ ॥
संप्रार्थयन्त्यत्र सुरानभीका यथा हयाः सारथिनोऽनुकूलाः ।
शुका यथा पिंजरगास्तथा स्युर्वशक्रियाभिर्ललना वशं मे ॥ १५ ॥
एभ्योऽतिरिक्तानपि कांश्चिदेते जपन्ति मन्त्रान् कमनाः कठोराः ।
नोच्चारणे न श्रवणे समर्थास्तेषां वयं स्मः सुकुमारयोषाः ॥ १६ ॥
श्रुतं मयैता विपदोऽङ्गनानां वशक्रियोच्चाटनमोहनादेः ।
न सन्ति नाके भवतां प्रदेशे न नीरसश्चास्ति रतं विनेच्छाम् ॥ १७ ॥

---

चलती हुई वह घटस्तनी मेरे वक्षस्थल की कामना करे । वह लाल लाल पैरों वाली वरारोहा मेरे पैरों की, वह मृगनयनी मेरे नयनों की, वह क्षीण कटिवाली मेरी कटि की और वह दुबली पतली कृशोदरी मेरे बाहुपाश की कामना करे ॥१४॥ हे देवो ! यहाँ के अनेक कामी पुरुष देवों से यह प्रार्थना किया करते हैं कि जैसे रथ के अश्व सारथी के एवं पिंजरे में रखे शुक अपने स्वामी के वश में रहते हैं उसी प्रकार वह ललना इस वश क्रिया द्वारा मेरे वश में हो जाय ॥ १५ ॥

वाञ्छ मे तन्वं पादौ वांछाक्ष्यौ वांछ सक्थ्यौ। अक्ष्यौ वृषण्यन्त्याः केशा मां ते कामेन शुष्यन्तु ॥ मम त्वा दोषणिश्रिषं कृणोमि हृदयश्रिषम् । यथा मम क्रतावसो मम चित्तमुपायसि ॥ यासां नाभेरारोहणं हृदिसंवननं कृतम् । गावो घृतस्य मातरोऽमूं संवानयन्तु मे ॥ (६।८) प्रोष्ठेशयास्तल्पेशया नारीर्या वह्यशीवंरीः । स्त्रियो याः पुण्यगन्धयस्ताः सर्वाः स्वापयामसि ॥ स्वप्तु माता स्वप्तु पिता स्वप्तु श्वा स्वप्तु विश्पतिः । स्वप्त्वस्यै ज्ञातयः स्वप्त्वयमभितो जनः ॥ (४।५) यथायं वाहो अश्विना समैति सं च वर्तते । एवा मामभि ते मनः समैतु सं च वर्तताम् ॥ आहं खिदामि ते मनो राजाश्वः पृष्ट्यामिव । रेश्मश्छिन्नं यथा तृणं मयि ते वेष्टतां मनः ॥ (अथर्ववेद ६।१०२)

ये कठोर चित्त वाले कामुक उच्चाटक इनके अतिरिक्त कुछ ऐसे भयानक मन्त्रों का जप करते हैं जिनके उच्चारण और श्रवण में हम सुकुमार चित्त और शरीर वाली नारियाँ असमर्थ हैं ॥१६॥ (अति अश्लील होने से नीचे के मन्त्रों का अर्थ लिखने का साहस नहीं हुआ । )

यान्त्वा गन्धर्वो अखनद् वरुणाय मृतभ्रजे ।
तां त्वा वयं खनामस्योषधिं शेपहर्षणीम् ॥

तत्र स्त्रियः सन्ति नराः समस्ताः सुदर्शना रोगजराविहीनाः।
सुगन्धदेहाः सुकलाः कलाज्ञाः प्रियंवदाः प्रेमघना विनीताः ॥ १८ ॥

---

उदुषा उदु सूर्यं उदिदं मामकं वचः।
उदेजतु प्रजापतिर्वृषा शुष्मेण वाजिना ॥
अद्याग्ने अद्य सवितरद्य देवि सरस्वति।
अद्यास्य ब्रह्मणस्पते धनुरिवातानया पसः ॥
अश्वस्याश्वतरस्याजस्य पेत्वस्य च।
अथ ऋषभस्य ये वाजास्तानस्मिन् धेहि तनूवशिन् ॥(अथर्व ४।४)
यथा पसस्तायादरं वातेन स्थूलभं कृतम्।
यावत् परस्वतः पसस्तावत्ते वर्धतां पसः॥
यावदंगीनं पारस्वतं हास्तिनं गर्दभं च यत्।
यावदश्वस्य वाजिनस्तावत्ते वर्धतां पसः ( अथर्व ६।७२ ) ॥
आवृषायस्व श्वसिहि वर्धस्व प्रथयस्व च।
यथांगं वर्धतां शेपस्तेन योषितमिज्जहि ॥
आहं तनोमि ते पसो अधि ज्यामिव धन्वनि।
क्रमस्वर्श इव रोहितमनवग्लायता सदा (६।१०१) ॥
यद्देवासो ललामगुं प्रविष्टीमिन माविषुः।
सकुला देदिश्यते नारी सत्यस्याक्षिभुवो यथा ॥
महानग्नी महानग्नं धावन्तमुपधावति।
इमास्तदस्य गा रक्ष मामदध्यौदनम् (अथर्ववेद २०।१३६) ॥

गणानान्त्वा गणपतिं हवामहे·····आहमजानिगर्भधमात्वमजासि गर्भधम् ॥ तावुभौ चतुरः पदः संप्रसारयावः·····वृषा वाजी रेतोधा रेतो दधातु ॥ उत्सक्थ्या अवगुदं धेहि समंजि चारया वृषन्। यः स्त्रीणां जीवभोजनः ॥ आहन्ति गभे पसो निगल्गलीति ॥ ऊर्ध्वामेनामुच्छ्रापय। अथास्यै मध्यमेधताम्। यदस्या अंहुभेद्याः कृधुस्थूलमुपातसत् ॥ ( वाजसनेयिसंहिता २३ )।

मैंने सुना है कि आप के स्वर्ग नामक देश में नारियों को ये वशीकरण, उच्चाटन और मोहन आदि की विपत्तियाँ नहीं भोगनी पड़तीं, तथा इच्छा के विरुद्ध नीरस विहार नहीं किया जाता ॥१७॥ वहाँ की सारी नारियाँ और सब नर सुन्दर, नीरोग, जरा से विहीन, सुगन्धदेह, दाता, कलाज्ञ, मिष्टभाषी, बड़े प्रेमी और विनीत हैं ॥१८॥ वहाँ स्थान-

जम्बूरसस्याम्ररसस्य दध्नः क्षीरस्य कुल्या मधुनः सुधायाः ।
स्थले स्थले सन्ति घृतस्य कूपाः सुगन्धपूर्णाः सरितः सुरायाः ॥ १९ ॥

लतोपगूढास्तरवो विनम्राः फलैः प्रसूनैर्विहगैः सरावैः ।
सर्वार्थदः कल्पतरुः सुगन्धिः शीतः समीरोऽस्ति च कामधेनुः ॥ २० ॥

परस्वदुर्बुद्धिमपास्य नित्यं देवीषु सर्वासु समेऽपि देवाः ।
नदीतटेषूपवनेषु सोमं निपीय पत्न्यां पतिवद् रमन्ते ॥ २१ ॥

ज्ञात्वेति नाकस्य वयं सुरीतीर्गन्तुं द्रुतं तत्र तपोरताः स्मः ।
हित्वैकपत्नीपतिसंयमार्तान् मनुष्यदेशान् विरसान् विमूढान् ॥ २२ ॥

कर्पासपुष्पाम्बरमत्यशुद्धं हित्वा शुचि व्याघ्रकुरंगचर्मं ।
कौशेयकीटास्यतनूजवस्त्रं दध्मः सुमेषार्भकरोमजं च ॥ २३ ॥

---

स्थान पर जामुन के रस, आम्ररस, दही, दूध, मधु और अमृत की नहरें बहती हैं, घृत के बड़े-बड़े कूप हैं और सुगन्धपूर्ण सुरा की अनेक नदियाँ हैं ॥१९॥ लताओं से आलिंगित और पुष्पों तथा फलों के भार से विनम्र वृक्ष समूह हैं, उनपर सुन्दर पक्षी गा रहे हैं, सब कामनाओं की पूर्ति करने वाला कल्पवृक्ष है, वैसी ही कामधेनु है और सदा शीतल मन्द सुगन्ध पवन बहा करता है ॥ २० ॥

एतास्त्वा धारा उपयन्तु सर्वाः स्वर्गे लोके मधुमत् पिन्वमानाः । उपत्वा तिष्ठन्तु पुष्करिणीः समन्ताः ॥ घृतह्रदा मधुकूलाः सुरोदकाः क्षीरेण पूर्णा उदकेन दध्ना ॥ अथर्ववेद ४।३४ ॥

वहाँ देवगण अपने पराये की दुर्बुद्धि का परित्याग कर सदा सोमरस पी कर सब देवियों के साथ नदी तटों और उपवनों में उसी प्रकार रमण करते हैं जैसे यहाँ पति अपनी धर्मपत्नी के साथ ॥२१॥ स्वर्ग की इस सुरीति को जानकर एकपत्नीव्रत और एकपति-व्रत रूपी संयम से त्रस्त इस विमूढ़ और नीरस मनुष्यलोक को छोड़कर वहाँ पहुँचने की अभिलाषा से हम नारियाँ अब घोर तपस्या में रत हो गई हैं ॥२२॥ इसलिये हमने कपास के फूल से बने अपवित्र सूती वस्त्रों का परित्याग कर दिया है। अब हम वाघम्बर या मृगचर्म धारण करती हैं, रेशम के कीड़ों के थूक से और मृत शरीर से बने कौशेय वस्त्रों का व्यवहार करती हैं तथा सुन्दर भेड़ों के बच्चों के रोम से बने ऊनी कपड़े पहनती हैं। मृदुतम होने के कारण इनमें हमें पशमीना सबसे प्रिय है ॥२३॥ अशुद्ध होने के कारण हमने सरसो, तिल,

तिलादिकानां फलजानि हित्वा तैलान्यशुद्धानि कुपूयमन्नम् ।
अद्मः पिबामो दधिकं पयस्यं धारोष्णदुग्धं नवनीतमाज्यम् ॥ २४ ॥
द्राक्षासवं मौक्तिकहेमभस्म सोमं च मांसं मधु यज्ञपूतम् ।
नाभूम हीनाश्च सहोमहोभ्यामहोऽस्ति चित्रस्तपसः प्रभावः ॥ २५ ॥
वसन्ति नाकेऽप्सरसः प्रभूताः शोभानिकाया अजरा उदाराः ।
संजायते तत्र न शिश्नदाहो न बीजहानिः कृपया यमाग्न्योः ॥ २६ ॥
श्रुत्वेति गन्तुं पुरुषा द्रुतं तं लोकं सतृष्णा ददते द्विजेभ्यः ।
पञ्चौदनाजान् शितिपादमेषान् ब्रह्मौदनं गा वनिताश्च कान्ताः ॥ २७ ॥
यो मेषमुष्कोऽथ सहस्रयोनिर्भूत्वाऽप्यहल्यां कृतवान् कृतार्थाम् ।
पादौ गृहीत्वा पितरं सुदूरं यः प्राक्षिपच्चाप्सरसां सहायः ॥ २८ ॥

---

मोमफली, महुआ, सूरजमुखी आदि के तेलों को छूना छोड़ दिया है । अन्न भी हमारे लिये त्याज्य है क्योंकि व्रतकाल में उसे खाने से धर्म भ्रष्ट हो जाता है और घोर नरकों में जाना पड़ता है । पुण्यप्राप्ति के लिये हम दही और घो से बने पदार्थ एवं खोवा, धारोष्ण दुग्ध, मक्खन और घी खाती हैं क्योंकि ये अतिशय पवित्र हैं ॥२४॥

इनके अतिरिक्त सोमरस, द्राक्षादि के आसव, मुक्ता सुवर्ण आदि का थोड़ा भस्म और यज्ञावशिष्ट पवित्र मधुमांस ले लेती हैं किन्तु विचित्र है तप का प्रभाव कि हमारी शक्ति और तेजस्विता में कुछ भी न्यूनता नहीं आई है ॥२५॥ आप के स्वर्गलोक में शोभा की खान, कभी भी वृद्ध न होने वाली और स्वभाव की अतिशय उदार अगणित अप्सरायें रहती हैं तथा यमदेव और अग्निदेव की कृपा से उनके सम्पर्क में सदा रहने वाले पुरुषों में भी बीजहानि और शिश्नदाह दोष नहीं आते ॥२६॥ इन बातों को सुन कर हमारे देश के पुरुष भी वहाँ झट पहुँचने की तृष्णा से आकुल हो गये हैं तथा इष्टसिद्धि के लिये ब्राह्मणों को पंचौदन अज, शितिपाद मेष, ब्रह्मौदन, गाय धन और सुन्दर स्त्री आदि का दान कर रहे हैं ॥२७॥

नैषां शिश्नं प्रदहति जातवेदाः स्वर्गे लोके बहुस्त्रैणमेषाम् । आस्ते यम उपयाति देवान् गन्धर्वैर्मदते सोम्येभिः । नैनान् यमः परिपुष्णाति रेतः । रथीह भूत्वा रथयान ईयते । पक्षीह भूत्वातिदिवः समेति ( ४।३४ ) ।

यो ददाति शितिपादमविं स नाकमभ्यारोहति । सर्वान् कामान् पूरयत्याभवन् प्रभवन् भवन् । जीवति पितृणांलोकेऽक्षितम् ( ३।२९ ) ॥

उक्तो वृषा विश्रुतसोमचौरो विशालकुक्षिः श्रुतिभिर्विडौजाः।
आखण्डलो दुश्च्यवनः स धन्यः सहस्रनेत्रोऽस्ति नृपो व इन्द्रः ॥ २९ ॥

योऽभूत् प्रसिद्धो बहुकश्यपानात् स कश्यपो वो जनकोऽस्ति धन्यः।
पत्न्योऽस्य ता धन्यतरा असुन्वन् सर्पान्झषान् याः पशुपक्षिवृक्षान् ॥ ३० ॥

असूत धर्मध्वजभूपपत्नी यां कोटिबर्षं रमणात् सुकन्याम्।
ग्रीष्मेऽतिशीतां शिशिरे सुखोष्णां वृन्दाभिधानां तुलसीमतुल्याम् ॥ ३१ ॥

---

पञ्चौदनो ब्रह्मणे दीयमानो दातारं तृप्त्या तर्पयति। अजस्त्रिनाके ददिवांसं दधाति। अजस्तमांस्यपहन्ति ( ९।५ ) ॥ अजः पक्वः स्वर्गे लोके दधाति पञ्चौदनो निर्ऋतिं बाधमानः। ब्राह्मणेभ्यो वशां दत्त्वा सर्वांल्लोकान् समश्नुते ( १०।१० ) ॥ शुद्धाः पूता योषितो यज्ञिया इमा ब्रह्मणां हस्तेषु प्रपृथक् सादयामि ॥ इदं धनं निदधे ब्राह्मणेषु कृण्वे पन्थां पितृषु यः स्वर्गः ( ११।१ ) ॥ जायमानाभिजायते ब्राह्मणान् वशा ( १२।४ ) ॥ (अथर्ववेद)

नारियों के परम भक्त आप के वे राजा इन्द्र धन्य हैं जिन्होंने मेषवृषण और सहस्रयोनि होने का कष्ट उठा कर भी करोड़ों योजन लम्बी यात्रा करके अहल्या को कृतार्थं किया तथा अप्सराओं को प्रसन्न करने के लिये पिता का पैर पकड़ कर आकाश में बहुत दूर फेंक कर माता को विधवा बना दिया ॥२८॥ श्रुति रूपी नारियों ने जिन्हें वृषा, विडौजा, आखण्डल, दुश्च्यवन आदि अपनी परम प्रिय उपाधियों से विभूषित किया है, जो चुरा चुरा कर सोमरस के अनेक सरोवरों को पी जाते हैं, इस चोरी में प्रसिद्ध हैं, जिनका उदर बहुत बड़ा है और जो सहस्राक्ष कहे जाते हैं ॥२९॥

त्रीसाकमिन्द्रो मनुष सरांसि सुतं पिबत् वृत्रहत्याय सोमम् ५।२९।७॥ आमुष्य सोममपिबत् ३।४८।४॥ ह्रदा इव कुक्षयः सोमधानाः ३।३६।८ कस्ते मातरं विधवामचक्रत्····यत्प्राक्षिणाः पितरं पादगृह्य ४।८।१२ ( ऋग्वेद ) ॥

आप के पिता वे कश्यपमुनि धन्य हैं जो बहुत कश्य ( मदिरा ) पीने के कारण कश्यप कहे जाते हैं और सर्प, मछली, पशु, पक्षी, वृक्ष आदि को पैदा करने वाली उनकी पत्नियाँ तो और भी धन्य हैं ॥३०॥

कश्यं मद्यं स्मृतं विप्रैः कश्यपानात् स कश्यपः।
वायुपुराण ६५।११६, ब्रह्माण्डपुराण ३।१।१२१

तां शंखचूडाय ददौ महीपः सोऽभूच्च तस्याः सुषमानियोज्यः।
यस्तामगृह्णाच्छलतः स विष्णुर्धन्योऽस्ति नारीचकिताद्यभिज्ञः॥ ३२॥क

---

ब्रह्मा से मरीचि और मरीचि से कश्यप पैदा हुये। दक्ष प्रजापति ने उन्हें अपनी तेरह कन्यायें दीं। उनमें अदिति से इन्द्र, विष्णु, आदित्य और भग आदि पैदा हुये। दिति से दैत्य, दनु से दानव, सुरसा से सर्प, कद्रू से २६ नाग, खसा से यक्ष, विनता से अरुण गरुड़, क्रोधवशा से राक्षस, ताम्रा से पक्षिगण, सुरभि से सियार आदि दंष्ट्री, मुनि से गन्धर्व अप्सरायें मुनिगण, इरा से तृण वृक्ष लता और अरिष्टा से कीट पतंग आदि पैदा हुये। ( पद्मपुराण—सृष्टिखण्ड )।

धर्मध्वज की अतिशय कामुकी पत्नी माधवी को सौ देववर्षों तक रमण करने के बाद गर्भ रहा और सौ वर्षों तक गर्भ धारण करने के बाद शुभ-लग्न, शुभनवांश में तथा शुक्रवार को उसने एक सुन्दरी कन्या को जन्म दिया। उसका शरीर ग्रीष्मकाल में शीतल और शीतकाल में सुखोष्ण रहता था। सौन्दर्य में अतुलनीय होने के कारण उसका नाम तुलसी और वृन्दा रखा गया॥३१॥

कार्तिकीपूर्णिमायां तु शुक्रवारे शुभांशके।
शीते सुखोष्णसर्वांगीं ग्रीष्मे च सुखशीतलाम्॥
नरा नार्यश्च तां दृष्ट्वा तुलनां दातुमक्षमाः।
तेन नाम्ना तु तुलसीं तां वदन्ति मनीषिणः॥ (देवीभागवत)

धर्मध्वज ने शंखचूड से उसका विवाह किया और वह अपनी पत्नी के सौन्दर्य का किंकर बन गया किन्तु वह विष्णु भगवान् की भाँति नारियों के चकित, ललित, विहृत्, विभ्रम, विलास, हास, विब्वोक, मोट्टायित, कुट्टमित, विक्षेप औदार्य, हेला, विच्छित्ति, कुतूहल आदि भावों का विशेषज्ञ नहीं था अतः धन्य हैं वे विष्णु जिन्होंने शिव की सहायता से उसे मार कर छलपूर्वक उसका अपहरण कर लिया॥ ३२क॥ देवीभागवत का कथन है कि शंखचूड़ ने पुष्पोद्यानों और नदीतटों पर उसका रददंशन, आलिंगन, चुम्बन, जंघामर्दन आदि किया, उसे हृदय से लगाया, उसका दास बन गया पर वह तृप्त न हुई।

दृष्ट्वाऽभितो यस्त्रपया भ्रमन्तीं वाचं विधिः पञ्चमुखो बभूव।
छिन्नोर्ध्ववक्त्रश्च गणेन शंभोश्चतुर्मुखः साम्प्रतमस्ति जातः॥ ३२ ॥ख

मेने च तामेव हठात् स्वपत्नीं चक्रे पुनस्तामपहाय यागम्।
आनीय शूद्रां तरुणीं मनोज्ञामाभीरकन्यां सुषमाभुजिष्यः॥ ३३ ॥

दृष्ट्वैव रामा रुचिराश्चकार यः शक्तिपातं वसने च पश्चात्।
हुत्वा समन्त्रं दहने स्वबीजं ददाविमान् सप्तमुनीन् स धन्यः॥ ३४ ॥

---

पुष्पोद्याने नदीतीरे ददौ रदनदंशनम्!
आलिंगनं चुम्बनं च जंघादिमर्दनं तथा॥
तुलसीं तु समाकृष्य चक्रे वक्षसि दानवः।
हे देवि तव दासोऽहं नैव तृप्तिं जगाम सा॥ देवीभागवत

(भिन्न भिन्न पुराणों का कथन है कि उसी की हड्डी से शंख बना है। तुलसी गण्डकी नदी बन गई, उसके केश से तुलसीवृक्ष बना और उसके शाप से हरि काले पत्थर शालग्राम बन गये जो गण्डकी में मिलते हैं। कहीं कहीं शंखचूड़ के स्थान में जालंधर का, कृष्ण के स्थान में विष्णु का और तुलसी के स्थान में वृन्दा का नाम है।)

आप के ब्रह्मा जी ने देवी सरस्वती को देखा तो कामातुर हो गये। लाज की मारी वह जिधर भागती, ब्रह्मा जी को नया मुख निकल आता। ऊपर उड़ी तो वे चतुर्मुख से पंचानन हो गये किन्तु शिव के गण भैरव ने या शिव ने पाचवाँ मुख काट दिया तो चतुरानन हो गये। सुनती हूँ कि वे अभी भी चतुरानन ही हैं परन्तु यहाँ दिखाई नहीं दे रहे हैं॥३२ख॥ उन्होंने सरस्वती के सौन्दर्य पर मुग्ध होकर उसे हठ पूर्वक पत्नी बना लिया किन्तु कुछ दिनों बाद यज्ञ करते समय उसका परित्याग कर और जाति पांत आदि का विचार छोड़ कर सुन्दरता को संमान देकर एक शूद्रा सुन्दरी और तरुणी अहीरकन्या को धर्मपत्नी मान लिया॥३३॥

पत्नीमन्या मदर्थे वै शीघ्रं शक्र समानय।
यावद्यज्ञसमाप्तिर्मे वर्णे त्वं मा कृथा मनः॥
आभीरकन्या रूपाढ्या सुनासा चारुलोचना।
अनयद्यत्र ब्रह्मासीत् गृहीत्वा तां करे दृढम्॥
गान्धर्वेण विवाहेन चोपयेमे पितामहः।
भृगुणा सहितैः कर्म वेदोक्तं तैः कृतं तदा॥

यस्यापतच्छुक्रमजेन साकं विलोक्य वाचं वरुणः स धन्यः।
उत्पादयामास मरुत्तदग्नावाहूय भृग्वंगिरसौ स धन्यः॥ ३५ ॥

दृष्ट्वा सुतौ वागवदत् प्रसन्ना प्रजापते देहि सुतं तृतीयम्।
ददे ऽत्रिमादित्यसमं विधाता यदाज्ञया वागपि साऽस्ति धन्या॥ ३६ ॥

इयं चरत्यग्निमरुत्सुरेशैः साकं हिमांश्वर्कभगादिदेवैः।
करोति तं तं सुधियं द्विजाग्र्यं यशस्विनं चापि वृणोति यं यम्॥ ३७ ॥

---

तथा युगसहस्रं तु स यज्ञः पुष्करेऽभवत्।
कृता च स महाभागा गायत्री नामतः प्रभो॥

पद्मपुराण—सृष्टिखण्ड १६

आप के जिन ब्रह्मा जी ने यह कर्म किया, कुछ सुन्दरियों के दर्शन मात्र से जिनका वस्त्र में ही शक्तिपात हो गया, बाद में जिन्होंने मन्त्र पढ़ पढ़ कर बीज का अग्नि में हवन किया और संसार को ये सात महामुनि दिये वे धन्य हैं ॥३४॥ वाग्देवी सरस्वती को देख ब्रह्मा के साथ जिनका वीर्यपात हुआ वे वरुण धन्य हैं और जिन्होंने अग्नि में उस वीर्य का हवन कर भृगु और अंगिरा को उत्पन्न किया वे मरुत् देव धन्य हैं ॥३५॥ उन दोनों पुत्रों को देख वाग्देवी बहुत प्रसन्न हुईं और प्रजापति से तृतीय पुत्र माँगने लगीं तो उन्होंने आदित्य सा तेजस्वी अत्रि नामक तृतीय पुत्र उत्पन्न किया अतः वाग्देवी भी धन्य हैं ॥३६॥

त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः।
आहरत्तत्र वाग्देवी ह्याजगामाशरीरिणी॥
तां दृष्ट्वा युगपत्तत्र ब्रह्मणो वरुणस्य च।
शुक्रं चस्कन्द तद्वायुरग्नौ प्रास्यद् यदृच्छया॥
ततोऽर्चिभ्यो भृगुर्जज्ञे चांगारेष्वंगिरा ऋषिः।
मुनिरत्रिस्ततो जज्ञे सूर्यानलसमप्रभः॥ ( बृहद्देवता )

मत्स्यपुराण का कथन है कि ब्रह्मा ने नारीदर्शन से च्युत वीर्य को अग्नि में डाला तो अंगारों से अंगिरा, अग्नि की अर्चि से अत्रि, अग्नि की मरीचियों से मरीचि, अग्निकेश से पुलह और पुलस्त्य तथा अग्नि के वसु से वसिष्ठ पैदा हुये। ब्रह्मा ने भृक् भृक् कहा तो भृगु पैदा हो गये।

देवानां मातरो दृष्ट्वा देवपत्न्यस्तथैव च।
शुक्रं स्कन्नं जुहावाग्नौ ब्रह्मा जाता महर्षयः॥

भवत्यभिज्ञस्य पुरो विवस्त्रा पत्युर्यथा विज्ञतमा सुपत्नी।
इयं तथांगानि समानि नग्ना पुरो बुधानां प्रकटीकरोति॥ ३८॥

---

अङ्गारेष्वंगिरा जातो वसिष्ठश्च वसूद्भवः।
मरीचिभ्यो मरीचिस्तु भृगुश्च तपतां निधिः॥

मत्स्यपुराण १९४

( सारांश यह कि सातो ऋषि ब्रह्मा के वीर्य द्वारा ही अग्नि से उत्पन्न हुये, वरुण और मरुत् से उनका सम्बन्ध नहीं है। मत्स्यपुराण में यह कथा अन्य प्रकार से लिखी है। ब्रह्मा अपनी कन्या सरस्वती को देख कामपीड़ित होकर अहोरूपं अहोरूपं कहते हुए चिल्लाने लगे और उनको क्रमशः पाँच मुख निकल आये। तब भैरव ने कुपित होकर ऊपर वाला मुख काट दिया। इसके बाद ब्रह्मा ने अपनी कन्या के साथ सौ वर्ष विहार किया तो हमारे आदि पुरुष स्वायंभुव मनु पैदा हुये और ब्रह्मा ने कामदेव को शाप दिया कि शिव तुम्हें भस्म कर देंगे। सारांश यह कि ब्रह्मा उसे शाप दे सकते थे पर स्वयं जला नहीं सकते थे। उन्होंने सारा पाप काम के मत्थे मढ़ दिया )।

दृष्ट्वा स्वदेहसंभूतां कामबाणार्दितों विभुः।
अहोरूपमहोरूपमिति प्राह प्रजापतिः॥
ततो वसिष्ठप्रमुखा भगिनीमिति चुक्रुशुः।
ब्रह्मा न किंचिद् ददृशे तन्मुखालोकनादृते॥
अथ प्रदक्षिणं चक्रे सा पितुर्वरर्णिनी।
चतुर्थमभवद् वक्त्रं कामातुरतया तथा॥
उत्पतन्त्यास्तदा तस्या आलोकनकुतूहलात्।
तेनोर्ध्वं वक्त्रमभवत् पंचमं तस्य धीमतः॥
तपश्च नाशमगमत् स्वसुतोपगमेच्छया।
उपयेमे स सावित्रीं पुत्रः स्वायंभुवोऽभवत्॥
ततश्च लज्जावनतः शशाप कुसुमायुधम्।
तस्मात् त्वद्देहमचिराच्छिवो भस्मी करिष्यति॥

मत्स्यपुराण अध्याय ३

भागवत् (३।१२) का कथन है कि पुत्रों के धिक्कारने पर ब्रह्मा ने शरीर छोड़ दिया। उसी से कुहरा पैदा हुआ। उसके पूर्व वह नहीं था।

विलोक्य नृत्याभिनयप्रवीणां विभूषितां तां युवतिं जनन्या।
प्रजापतिः कामवशो यदाऽभून्निवारितोऽनेन बलाच्छिवेन ॥ ३९ ॥
दिवौकसां या भवतां स्वसोषा शृङ्गाररसक्ता प्रमदाऽस्ति रम्या।
सा नूत्नवस्त्राभरणानि नित्यं दधाति पुंसां पुरतो हसन्ती ॥ ४० ॥
प्रदर्शयन्ती च कुचौ शरीरं भ्रातुः कटाक्षेण विभाति भानोः।
धावन्ति सूर्याग्निभगादिजारा हावैर्विमुग्धा अपि पृष्ठतोऽस्याः ॥ ४१ ॥
यमी यमं प्राह सहोदर त्वामाकारयाम्यत्र विविक्तदेशे।
कामाभिभूता रमणाय कान्तं न गर्हितं कृत्यमिदं सुरेषु ॥ ४२ ॥

---

ब्रह्मवैवर्तपुराण ( ब्रह्मखण्ड ४ ) का कथन है कि रति देवी को देख कर ब्रह्मा का वीर्य पात हुआ, वे लजा गये और उसे वस्त्र से ढकने लगे। फिर भी महायोगी हैं और वेद उन्हीं से उत्पन्न हैं।

रतिं दृष्ट्वा ब्रह्मणश्च रेतःपातो बभूव ह।
तत्र तस्थौ महायोगी वस्त्रेणाच्छाद्य लज्जया ॥

ये वाग्देवी अग्नि, वायु, इन्द्र, चन्द्र, सूर्य और भग आदि देवों के साथ घूमा करती हैं और विशेषता यह है कि जिस जिस का वरण करती हैं उसको मेधावी, द्विजश्रेष्ठ और यशस्वी बना देती हैं। ॥३७॥ जैसे विज्ञा पत्नी विज्ञपति के सामने विवस्त्रा हो जाती है उसी प्रकार ये सरस्वती नग्न होकर विद्वानों को अपना सर्वांग दिखाती हैं ॥३८॥ वीणावादिनी, नृत्य और अभिनय में प्रवीण युवती सरस्वती को माता द्वारा विभूषित देखकर ब्रह्मा कामातुर हुये तो शिव ने बलपूर्वक उनका निवारण किया ॥३९॥ आप स्वर्गवासी देवों की उषा नाम्नी जो शृंगारप्रिया, सुन्दरी और प्रमदा भगिनी है वह सदा नूतन वस्त्रों और आभूषणों को धारण करती है और पुरुषों के सामने हँसती रहती है ॥४०॥ वह अपने पूरे शरीर और कुचों का प्रदर्शन करती है, अपने भाई सूर्य के कटाक्ष से प्रसन्न होती है और सूर्य, अग्नि, भग आदि जार इसके हावों से विमुग्ध होकर पीछे-पीछे दौड़ते रहते हैं ॥४१॥

उषा प्रिया दिवः १।४६।१॥ स्वायां देवो दुहितरि त्विषिं धात् १।७१।५॥ अधिपेशांसि वपते नृतूरिव १।९२।४॥ योषा जारस्य चक्षसा विभाति १।९२।११॥ कन्येव तन्वा शाश्वदाना संस्मयमाना युवतिः पुरस्तादा-

भ्राता स किं यस्य भगिन्यनाथा का वा स्वसा भ्रातृसुखाय या नो।
संयोज्य तन्वाऽऽशु तनुं हराधि त्वाऽऽवेष्टुमिच्छामि लतेव वृक्षम् ॥ ४३ ॥

प्रभामसह्यामवलोक्य भर्तुर्भूत्वाऽश्विनी क्वापि गताऽर्कजाया।
सूर्योऽपि भूत्वाऽश्वतनुर्मुखेऽस्याः कामी मुखेनैव रतं चकार ॥ ४४ ॥

तन्नासिकाभ्यां भिषजौ सुराणां द्वावश्विनौ मद्यरतौ विजातौ।
याभ्यां सुतं वध्रिमती सुरूपा क्लीबस्य भार्याऽऽप हिरण्यहस्तम् ॥ ४५ ॥

---

विर्वक्षांसि कृणुषे विभाती १।१२३।१०॥ सुसंकाशा मातृमृष्टेव योषाविस्तन्वं कृणुषे १।१२३।११ सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् १।११५।२॥ सखाभूदश्विनोरुषा ४।५२।२॥ गृहं गृहं याति १।१२३।४॥ भगस्य स्वसा वरुणस्य जामिरुषा १।१२३।५॥ (ऋग्वेद) ॥

यमी ने यम से कहा कि हे सहोदर ! मैं काम से सन्तप्त होकर तुझ कान्त को रमण के लिये इस एकान्त स्थान में आमन्त्रित कर रही हूँ। आवो, देवों में यह कर्म निन्दित नहीं है ॥४२॥ उस भ्राता से क्या लाभ जिसकी भगिनी अनाथ हो और उस भगिनी से क्या लाभ जो भाई को सुख न दे सके। अपना शरीर मेरे शरीर से आश्लिष्ट कर मेरी व्यथा दूर करो। जैसे लता वृक्ष को लपेटती है, मैं तुम्हें उसी प्रकार आच्छादित करना चाहती हूँ ॥४३॥

ओचित् सखायं सख्या विवृत्यां····१०।१०।१॥ उशन्ति····नि ते मनो मनसि ध्याय्यस्मे जन्युः पतिस्तन्वमाविविश्याः १०।१०।३॥ यमस्य मा याम्यं काम आगन् समाने योनौ सह शेय्याय। जायेव पत्ये तन्वं रिरिच्यां विचिद्वृहेव रथ्येव चक्रा १०।१०।७॥ किं भ्राताऽसद्यदनाथं भवति किमु स्वसायन्निर्ऋति-र्निगच्छात्। काममूता बह्वेतद्रपामि तन्वा मे तन्वं संपिपृग्धि १०।१०।११॥ अन्या किल त्वां परिष्वजाते लिबुजेव वृक्षम् १०।१०।१३॥ ( ऋग्वेद )

सूर्य की पत्नी को पति का तेज असह्य हुआ तो वह घोड़ी का रूप धारण कर कहीं भाग गई। कामी सूर्य ने घोड़े का रूप धारण कर उसके मुख में अपने मुख से मैथुन किया ॥४४॥ तब उस अश्विनी के दोनों नासा-छिद्रों से देवों के वैद्य, दो जुड़वे भाई अश्विनी कुमार पैदा हुये। वे दोनों मद्यपायी हैं। सुरूपा वध्रिमती का पति नपुंसक था। किन्तु दोनों की कृपा से उसने हिरण्यहस्त नामक पुत्र प्राप्त कर लिया ॥४५॥ सूर्य की कन्या सूर्या

इष्टापि सोमस्य हठेन पूष्णे सूर्येण सूर्या स्वसुता प्रदत्ता।
हित्वा पतिं भ्रातृरता खराढ्ये साऽप्येतयोरेव रथेऽधिरूढा ॥ ४६ ॥

नास्माभिरेतौ कमनौ कुमारौ कदापि दृष्टौ दिवसे च रात्रौ।
का सेवते देवरवद् रजन्यां का वा दिवा शाययते न विद्मः ॥ ४७ ॥

---

को सोमदेव चाहते थे किन्तु सूर्य ने उसे हठ पूर्वक पूषा को समर्पित कर दिया। फिर भी वह पति को छोड़ इन भाइयों के उस रथ पर आ बैठी जिसमें गधे जुते हैं ॥४६॥

शतं कुंभानसिंचतं सुरायाः १।११६।७ ॥ अजोहवी''''श्रुतं तच्छाशुना वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम् १।११६।१३ ॥ आवां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठतादर्वता जयन्ती। विश्वेदेवा अन्वमन्यत हृद्भिः १।११६।१७ ॥ सूरे दुहिता रुहद्रथम् १।३४।५ ॥ कत्री चक्रा''''कदा योगो रासभस्य १।३४।९। युवोरुषा अनुश्रियमुपाचरत् १।४६।१४ ॥ युवो रथं दुहिता सूर्यस्यावृणीत १।११७।१३ ॥ वां रथो मनसो जवीयान् वातरंहा त्रिबन्धुरः १।११८।१ ॥ दिवो दुहित्रोषसा सचेथे १।१८३।२॥ (ऋग्वेद) ॥

पद्मपुराण ( सृष्टिखण्ड ८ ) का कथन है कि कश्यपपत्नी अदिति से सूर्य उत्पन्न हुये। उनकी पत्नी ( त्वष्टापुत्री ) संज्ञा से मनु, यम और यमुना नदी का जन्म हुआ। संज्ञा को सूर्य का तेज असह्य था अतः उसने अपने शरीर से छाया नाम की नारी पैदा की, उससे कहा कि मेरे बच्चों का प्रेम से पालन करना और भाग गई। छाया से सावर्णि मनु पैदा हुये। छाया के शाप से यम के पैर में कीड़े पड़ गये थे अतः उन्होंने एक दिन सूर्य को सारा भेद बता दिया कि मेरी वास्तविक माता भाग गई है। सूर्य के आशीर्वाद से यम के पैर के कीड़ों को मुर्गे खा गये और सूर्य कामातुर होकर ससुराल गये। तेज कम करने के लिये त्वष्टा ने सूर्य का शरीर खरादा और निकले खराद से विष्णु का चक्र, शिव का त्रिशूल और इन्द्र का वज्र बनाया। सूर्य का शरीर सुन्दर और सह्य हो गया पर पैर वैसा ही रहा। सूर्य की ओर पैर करने वाला कोढ़ी हो जाता है।

मत्स्यपुराण (अध्याय ११) का कथन है कि संज्ञा घोड़ी बन कर मरु देश में तपस्या कर रही थी। सूर्य वहाँ घोड़ा बन कर गये, उसके मुख में मुख सटा कर मैथुन किया पर संज्ञा ने पर पुरुष समझ कर नाक में प्रविष्ट

क्षिप्तस्तडागे च्यवनोऽभिकाभ्यां वृद्धः सुकन्यामवलोक्य ताभ्याम् ।
कृतश्च पश्चाद् बहुकामुकीनां पतिः सहोवानतिलज्जिताभ्याम् ॥ ४८ ॥
दृष्ट्वोर्वशीबिल्वकुचावभूतां कामेन मित्रावरुणौ प्रतप्तौ ।
बीजस्य पातस्त्वनयोर्घटेऽभूज्जातौ ततोऽगस्त्यवसिष्ठसाधू ॥ ४९ ॥

---

उनके वीर्य को दोनों नासाछिद्रों से बाहर झटक दिया तो उससे दो सुन्दर देव अश्विनीकुमार पैदा हो गये। नासिका से पैदा होने के कारण ही वे नासत्य और दस्र कहे जाते है ॥

संज्ञाऽसहन्ती सूर्यस्य तेजस्तीव्रं भयाकुला ।
बडवारूपमास्थाय भूतले सम्प्रतिष्ठिता ॥
कामयामास कामार्तो मुख एव दिवाकरः ।
संज्ञा च मनसा क्षोभमगमद् भयविह्वला ॥
नासापुटाभ्यामुत्सृष्टं परोऽयमिति शंकया ।
तद्रेतसस्ततो जातावश्विनौ नासिकाग्रतः ॥
दस्रौ सुतत्वात् संजातौ नासत्यौ नासिकाग्रतः ।
विमानेनागमत् स्वर्गं पत्या सह मुदान्विता ॥

( मत्स्यपुराण ११ )

ये दोनों कुमार न कभी दिन में दिखाई देते हैं न रात में। पता नहीं, कौन सी विधवा कामिनी इन्हें दिन और रात में देवर की भाँति छिपा कर अपनी शय्या पर सुलाती है ॥४७॥

कुहस्विद्दोषा कुहवस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥

ऋग्वेद १०।४०।२

इन दोनों ने सुकन्या के रूप से कामार्त होकर उसके वृद्ध पति च्यवन को सरोवर में फेंक दिया किन्तु बाद में लज्जित होकर उन्हें युवा, बलवान् और अनेक कामुकियों का पति बना दिया ॥४८ ॥

पुनश्च्यवानं चक्रथुर्युवानम् ( ऋक् १।११८।६ ) पतिमकृणुतं कनीनाम् ( ऋक् १।११६।१० )

देवी भागवत का कथन है कि वृद्ध च्यवन ऋषि वन में तपस्या कर रहे थे। उनका शरीर दीमकों से ढक गया था किन्तु आँखें खुली थीं और चमक रही थीं। राजा शर्याति वहाँ मृगया के लिये आये और उनकी कन्या

